# शतृशानजन्तमञ्जरी




संस्कृतभारती
बेङ्गलूरु

**संस्कृतभारती**
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५

प्रथममुद्रणम् - १९९३ - ५०००
द्वितीयमुद्रणम् - १९९७ - ५०००



मूल्यं - रू. १८.००

कला - श्री लिङ्गदेवरु

**मुद्रणम् -**
स्प्यान् प्रिण्ट्
बसवनगुडि, बेङ्गलूरु - ४

SATRŚĀNAJANTA MAÑJARĪ -
A Work Book for Samskrit learners on Participle Forms (Śatṛ and Śānac).

Publisher - SAMSKRITA BHARATI - 'Aksharam', 8th Cross, II Phase, Girinagar, Bangalore - 560 085.
Ph : 6613052 / 6617276
Fax : 6617276
E-mail :
samskrit.sscentre.@gems.vsnl.net.in

Pages - iii + 65 - Price - Rs. 18-00
Second Print - April - 97

Printed at -
Span Print
Basavanagudi, Bangalore - 4

# प्रस्ताविकं किञ्चित्.....

## (प्रथममुद्रणस्य)

केचन व्याकरणांशाः ज्ञानमात्रेण आत्मसात् न भवन्ति । ते अधिकाभ्यासेन आत्मसात्करणीयाः । तादृशेषु अन्यतमाः सन्ति शतृप्रत्ययान्ताः शानच्-प्रत्ययान्ताः च । एते दैनन्दिनव्यवहारे बहुधा उपयुज्यन्ते अपि । किन्तु शतृशानजन्तानां विशेषणत्वेन प्रयोगः, शतरि स्त्रियां नुम्व्यवस्था, शानचि मुग्व्यवस्था, कर्मणिशानच् - इत्यादीनि दोषस्थानानि सन्ति । दोषस्थानानां विषये स्पष्टज्ञानं, पौनःपुन्येन अभ्यासः, अवधानपूर्वकं प्रयोगः च भवेत् एव । एतया दृष्ट्या उपयोगाय भवतु इति उद्देशेन एतस्य पुस्तकस्य रचनाप्रयासः कृतः ।

सरलतया संक्षेपेण च विषयं निरूपयितुं, सोपानक्रमेण अभ्यासान् आयोजयितुम्, अभ्यासेषु वैविध्यं नावीन्यं च आनेतुं चापि एतस्मिन् पुस्तके प्रयासः कृतः । एतत्सर्वं भाषाभ्यासिनां सौकर्याय सन्तोषाय च भवेत् इति वयं भावयामः ।

आवश्यकतानुगुणं तत्तत्सन्दर्भे कार्यकर्तृभिः सज्जीकृताः अभ्यासाः अत्र सङ्कलिताः । अतः तान् कार्यकर्तॄन् कृतज्ञतापूर्वकं स्मरामः । एवम् एव मुद्रणकारं, तत्सहकारिणः, कलाकारं चापि कृतज्ञतापूर्वकं स्मरामो हि ।

श्रीमुख सं।। गणेशचतुर्थी — **प्रकाशकः**
१९.९.१९९३

## (द्वितीयमुद्रणस्य)

चिरकालानन्तरम् एतस्य पुनर्मुद्रणं प्रचलत् अस्ति । उपयोक्तारः एव एतस्य कारणीभूताः । अतः तान्, मुद्रकम्, अन्यान् सहकारिणः च कृतज्ञतापूर्वकं स्मरामः ।

ईश्वर सं।। युगादिः — **प्रकाशकः**
८/४/९७

# विषयानुक्रमणिका

## १. शतृप्रत्ययः


**१. १. १. शतृ-पुंल्लिङ्गे ...... ...... ...... १ - १६**

१.१.४. शतृ (पुं) - प्रथमा/६
१.१.५. शतृ (पुं) - द्वितीया/७
१.१.७. शतृ (पुं) - तृतीया/९
१.१.८. शतृ (पुं) - चतुर्थी/१०
१.१.९. शतृ (पुं) - पञ्चमी/१२
१.१.१०. शतृ (पुं) - षष्ठी/१२
१.१.११. शतृ (पुं) सप्तमी/१४
१.१.१२. शतृ (पुं) - मिश्रवाक्यानि/१५

**१. २. शतृ-स्त्रीलिङ्गे ...... ...... ...... १७ - ३१**

१.२.१. 'ति' तः पूर्व कः स्वरः?/१७
१.२.२. नुम्व्यवस्था/१८
१.२.३. एषा किं कुर्वती अस्ति?/२१
१.२.४. शतृ (स्त्री) - प्रथमा/२३
१.२.५. शतृ (स्त्री) - द्वितीया/२४
१.२.६. शतृ (स्त्री) - तृतीया/२६
१.२.७. शतृ (स्त्री) - चतुर्थी/२७
१.२.८. शतृ (स्त्री) - पञ्चमी/२८
१.२.९. शतृ (स्त्री) - षष्ठी/२९
१.२.१०. शतृ (स्त्री) - सप्तमी/३०
१.२.११. शतृ (स्त्री) मिश्रवाक्यानि/३१

**१. ३. शतृ-नपुंसके ...... ...... ...... ३२ - ३६**

**१. ४. एकस्मिन् वाक्ये शत्रन्ताः बहवः (पुं./स्त्री/नपुं) ...... ३७ - ३९**


## २. शानच्प्रत्ययः


**२. १. शानच् कर्तरि ...... ४० - ४५**

**२. २. कर्मणि शानच् ...... ४६ - ५५**

२.२.३. कर्मणि शानच् कर्मणः विशेषणम्/४९

**परिशिष्टम् - १ - व्यावहारिकदृष्ट्या शतृ-शानजन्तयोः निरूपणम् ...... ५६**

**परिशिष्टम् - २ - शतृप्रत्यये स्त्रियां नुम्व्यवस्था (समग्रा सूत्रसहिता च) ...... ५७**

**परिशिष्टम् - ३ - शानच्प्रत्यये परे मुग्व्यवस्था ( समग्रा सूत्रसहिता च) ...... ५८**

**उत्तराणि ५९**

# १. शतृप्रत्ययः

## १.१. शतृप्रत्ययः

धातवः परस्मैपदिनः आत्मनेपदिनः उभयपदिनः इति त्रिविधाः इति वयं जानीमः। वर्तमानकालार्थे परस्मैपदिधातूनां शतृप्रत्ययः भवति। 'शतृ' इत्यत्र 'अत्' भागः अवशिष्यते। शतृयोगात् शत्रन्तं प्रातिपदिकं सिध्द्यति। विशेषणरूपेण शत्रन्तस्य प्रयोगः क्रियते लोके। शत्रन्तं पदं पुंल्लिङ्ग-स्त्रीलिङ्ग-नपुंसकलिङ्गभेदात् विभिन्नं रूपं प्राप्नोति।

यथा - पठति ——— पठन् - पुंल्लिङ्गे
पठन्ती - स्त्रीलिङ्गे
पठत् - नपुंसकलिङ्गे

### १.१.१. शतृप्रत्ययान्तः पुंल्लिङ्गे

'पठन्' इति पुंल्लिङ्गरूपम् इति उपरि निर्दिष्टम्। पुंल्लिङ्गे 'पठत्' इति प्रातिपदिकम्। प्रथमाविभक्तेः एकवचनान्तं रूपं 'पठन्' इति। एतत् रूपं ज्ञातं चेत् अन्येषु वचनेषु, अन्यासु विभक्तिषु च कथं रूपाणि इति तु सुलभतया ज्ञायते।

शत्रन्तपुंल्लिङ्ग-प्रथमैकवचनान्तं रूपं वर्तमानकाल (लट्)-प्रथमपुरुष-बहुवचनस्य साम्यं भजते। बहुवचनरूपस्य 'ति' भागः अपसारितः चेत् अवशिष्टः भागः एव शत्रन्तभागः भवति।

यथा - i) 'पठ' धातो - लट् प्र.पु. बहुवचनरूपं - 'पठन्ति'
अत्र 'ति' अपसारितः चेत् अवशिष्टः भागः - 'पठन्'
एतदेव शत्रन्तस्य प्रथमैकवचनान्तं रूपम्।

| | ए.व. | ब.व. | शत्रन्तरूपम् |
|---|---|---|---|
| ii) | लिखति ——— | लिखन्ति ——— | लिखन् |
| iii) | खादति ——— | खादन्ति ——— | खादन् |
| iv) | करोति ——— | कुर्वन्ति ——— | कुर्वन् |
| v) | शृणोति ——— | शृण्वन्ति ——— | शृण्वन् |

**अभ्यासः -** अधोनिर्दिष्टानां बहुवचनरूपं पुंलिङ्गैकवचनरूपं च लिखन्तु।

उदा - करोति - कुर्वन्ति - कुर्वन्

| लट् - प्र.ए.व. | लट् - प्र. ब.व. | शत्रन्त - पुंलिङ्गैकवचनम् | लट् - प्र.ए.व. | लट् - प्र. ब.व. | शत्रन्त - पुंलिङ्गैकवचनम् |
|---|---|---|---|---|---|
| १. तनोति | ------------ | ------------ | १६. ददाति | ------------ | ------------ |
| २. शृणोति | ------------ | ------------ | १७. प्राप्नोति | ------------ | ------------ |
| ३. हरति | ------------ | ------------ | १८. अभ्यस्यति | ------------ | ------------ |
| ४. ताडयति | ------------ | ------------ | १९. चिनोति | ------------ | ------------ |
| ५. नृत्यति | ------------ | ------------ | २०. बध्नाति | ------------ | ------------ |
| ६. कुप्यति | ------------ | ------------ | २१. दण्डयति | ------------ | ------------ |
| ७. जानाति | ------------ | ------------ | २२. वर्णयति | ------------ | ------------ |
| ८. क्रीणाति | ------------ | ------------ | २३. प्रीतगृह्णाति | ------------ | ------------ |
| ९. रोदिति | ------------ | ------------ | २४. स्वीकरोति | ------------ | ------------ |
| १०. गृह्णाति | ------------ | ------------ | २५. नश्यति | ------------ | ------------ |
| ११. शक्नोति | ------------ | ------------ | २६. पश्यति | ------------ | ------------ |
| १२. विश्वसिति | ------------ | ------------ | २७. प्रविशति | ------------ | ------------ |
| १३. विवृणोति | ------------ | ------------ | २८. आरोहति | ------------ | ------------ |
| १४. भिनत्ति | ------------ | ------------ | २९. चर्चयति | ------------ | ------------ |
| १५. जिघ्रति | ------------ | ------------ | ३०. पीडयति | ------------ | ------------ |

१.१.२. उदाहरणं दृष्ट्वा चित्रसाहाय्येन तादृशानि वाक्यानि लिखन्तु ।

उदा - 

क्रीडापटुः क्रीडति ।

क्रीडापटुः क्रीडन् अस्ति ।



१. बालकः शृणोति ।

---------------- ---------------- ------------- ।



२. बालकः लिखति ।

---------------- ---------------- ------------- ।



३. कलाकारः वादयति ।

---------------- ---------------- ------------- ।



४. रामः जिघ्रति ।

---------------- ---------------- ------------- ।



५. भक्तः नमस्करोति ।

---------------- ---------------- ------------- ।



६. तरुणः पश्यति ।

---------------- ---------------- ------------- ।



७. शिशुः हसति ।

---------------- ---------------- ------------- ।



८. कपिः आरोहति ।

---------------- ---------------- ------------- ।



९. शिशुः रोदिति ।

--------------- --------------- -------------- ।



१०. गुरुः उपदिशति ।

--------------- --------------- -------------- ।



११. नर्तकः नृत्यति ।

--------------- --------------- -------------- ।



१२. वृद्धः गच्छति ।

--------------- --------------- -------------- ।

१.१.३. शत्रन्तपदं प्रयुज्य एकं वाक्यं कुर्वन्तु ।

| यथा – | बालकः जलं पिबति, गच्छति ।<br>बालकः जलं पिबन् गच्छति । |
|---|---|

१. सेवकः पुष्पम् आनयति, नमस्करोति ।

---------------------------------------------------------------------------- ।

२. वानरः वृक्षम् आरोहति, खादति ।

---------------------------------------------------------------------------- ।

३. पुत्रः वस्त्रं क्षालयति, कथयति ।

---------------------------------------------------------------------------- ।

४. अध्यापकः पाठं विवृणोति, प्रश्नं पृष्टवान् ।

---------------------------------------------------------------------------- ।

५. बालकः कथां शृणोति, हसति ।

---------------------------------------------------------------------------- ।

६. स्वामी धनं स्वीकरोति, कथयति ।

------------------------------------------------------------------------ |

७. जनाः चलच्चित्रं पश्यन्ति, कोलाहलं कृतवन्तः ।

------------------------------------------------------------------------ |

८. विद्यार्थिनः वाक्यानि शृण्वन्ति, लिखन्ति ।

------------------------------------------------------------------------ |

९. नटाः अभिनयन्ति, जनान् तोषयन्ति ।

------------------------------------------------------------------------ |

१०. कर्मकराः भारं वहन्ति, अग्रे गच्छन्ति ।

------------------------------------------------------------------------ |

**विशेषः -** पूर्वं दृष्टेषु शत्रन्तरूपेषु प्रथमैकवचने अन्ते 'न्' (गच्छन्, पठन् - इत्यादिषु) दृष्टं खलु ? तृतीयगणीयानां धातूनाम् एवं नकारः न भवति, अपि तु तकारः भवति । तृतीयगणीयेषु 'ददाति' इत्येतत् प्रसिद्धम् । तस्य शत्रन्तरूपं तु 'ददत्' इति । ('ददन्' इति रूपं तु अशुद्धम् ।)

'ददाति' 'यच्छति' - अनयोः अर्थः समानः । अतः 'ददति' इत्येतस्य स्थाने 'यच्छन्ति' इति, 'ददत्' इत्येतस्य स्थाने 'यच्छन्' इति च प्रयोगः सुलभः भवति ।

**अभ्यासः -** आवरणे निर्दिष्टस्य 'दा'धातोः शत्रन्तरूपेण रिक्तस्थलानि पूरयन्तु।

१. शिष्यः गुरुदक्षिणां (ददाति) ---------------------------- गुरुं नमस्करोति ।

२. धनिकः धनं (ददाति) -------------------------------- पुण्यं सम्पादयति ।

३. ग्राहकः धनं (ददाति) ----------------------------------- वस्तूनि पश्यति ।

४. जनाः धनं (ददति) ------------------------------------ वस्तूनि क्रीणन्ति ।

५. बालकः कन्दुकं (यच्छति) ---------------------------------------- हसति ।

६. भक्ताः दरिद्रेभ्यः तण्डुलं (यच्छन्ति) ---------------------------- गच्छन्ति ।

## १.१.४. शतृ - (पु.) प्रथमाविभक्तिः

अधः वाक्ययुगलानि दत्तानि सन्ति । उदाहरणे दर्शितेन क्रमेण प्रथमवाक्ये शत्रन्तरूपं प्रयुज्य अखण्डं वाक्यं रचयन्तु ।

> यथा - छात्रः पाठं पठति । निद्रां करोति ।
> छात्रः पाठं <u>पठन्</u> निद्रां करोति ।

१. भक्तः देवं पश्यति । प्रदक्षिणं करोति ।

---------------------------------------------------------------------- ।

२. बालकः गृहं गच्छति । परिसरं पश्यति ।

---------------------------------------------------------------------- ।

३. शिशुः क्षीरं पिबति । हसति ।

---------------------------------------------------------------------- ।

४. युवकः यानं चालयति । सम्भाषणं करोति ।

---------------------------------------------------------------------- ।

५. आपणिकः वस्तूनि दत्तवान् । धनं पृष्टवान् ।

---------------------------------------------------------------------- ।

६. भाषणकारः भाषणं कृतवान् । परितः दृष्टवान् ।

---------------------------------------------------------------------- ।

७. कपयः फलानि खादन्ति । वृक्षात् वृक्षम् उत्पतन्ति ।

---------------------------------------------------------------------- ।

८. नृपाः न्यायम् अनुसृतवन्तः । प्रजाः पालितवन्तः ।

------------------------------------------------------------------------ ।

९. मयूराः मेघध्वनिं श्रुतवन्तः । नृत्यं कृतवन्तः ।

------------------------------------------------------------------------ ।

१०. भक्ताः श्लोकम् उक्तवन्तः । देवं नमस्कृतवन्तः ।

------------------------------------------------------------------------ ।

## १.१.५. शतृ (पुं) - द्वितीयाविभक्तिः (ए.व.)




उपरितनं चित्रं दृष्ट्वा रामः किं किं कृतवान् इति लिखन्तु ।

यथा - १. रामः <u>गच्छन्तं</u> <u>बालकम्</u> आहूतवान् ।

२. ------------------------------------------------------------ ।

३. ------------------------------------------------------------ ।

४. ------------------------------------------------------------ ।

५. ------------------------------------------------------------------------ ।

६. ------------------------------------------------------------------------ ।

७. ------------------------------------------------------------------------ ।

८. ------------------------------------------------------------------------ ।

९. ------------------------------------------------------------------------ ।

१०. ------------------------------------------------------------------------ ।

११. ------------------------------------------------------------------------ ।

१२. ------------------------------------------------------------------------ ।

### १.१.६. शतृ (पु.) - द्वितीयाविभक्तिः - (ब.व.)

रेखाङ्कितानां शब्दानां बहुवचनरूपाणि उपयुज्य अधस्तनवाक्यानि पुनः लिखन्तु ।

| यथा - | रामः गच्छन्तं बालकं दृष्टवान् । |
| --- | --- |
| | रामः गच्छतः बालकान् दृष्टवान् । |

१. व्याधः धावन्तं मृगम् अनुसृतवान् ।

------------------------------------------------------------------------ ।

२. स्वामी तूष्णीं तिष्ठन्तं कर्मकरं तर्जितवान् ।

------------------------------------------------------------------------ ।

३. नृत्यन्तं मयूरं दृष्ट्वा जनाः सन्तुष्यन्ति ।

------------------------------------------------------------------------ ।

४. अपहरन्तं चोरम् आरक्षकाः गृहीतवन्तः ।

------------------------------------------------------------------------ ।

५. क्रीडन्तं बालकम् अध्यापकः आहूतवान् ।

------------------------------------------------------------------------ ।

६. गच्छन्तं जनं भवान् मा पीडयतु ।

------------------------------------------------------------------------ ।

७. श्लोकं पठन्तं छात्रम् अध्यापकः श्लाघितवान् ।

------------------------------------------------------------------------ ।

८. दीपं विना यानं चालयन्तं जनम् आरक्षकः गृहीतवान् ।

------------------------------------------------------------------------ ।

९. निद्रां कुर्वन्तं पुत्रं माता उत्थापितवती ।

------------------------------------------------------------------------ ।

### १.१.७. शतृ (पु.) - तृतीयाविभक्तिः

अधः कर्तरिप्रयोगसम्बन्धीनि वाक्यानि सन्ति । तानि कर्मणिप्रयोगेण लिखन्तु ।

यथा -

> गच्छन् अध्यापकः कार्यं सूचितवान् ।
> गच्छता अध्यापकेन कार्यं सूचितम् ।

१. उपवासम् आचरन् मुनिवरः मौनं स्थितवान् ।

------------------------------------------------------------------------ ।

२. वाक्यं वदन् सः दोषं कृतवान् ।

------------------------------------------------------------------------ ।

३. गीतां पठन् छात्रः श्लोकान् कण्ठस्थीकृतवान् ।

---------------------------------------------------------------------- ।

४. गीतं शृण्वन् भवान् निद्रां कृतवान् ।

---------------------------------------------------------------------- ।

५. सन्मार्गे गच्छन् जनः सर्वं साधयति ।

---------------------------------------------------------------------- ।

६. क्रीडन्तः बालकाः कोलाहलं कृतवन्तः ।

---------------------------------------------------------------------- ।

७. जानन्तः अपि जनाः नियमान् न पालितवन्तः ।

---------------------------------------------------------------------- ।

८. नमस्कुर्वन्तः भक्ताः देवं स्मृतवन्तः ।

---------------------------------------------------------------------- ।

९. कार्यं कुर्वन्तः कर्मकराः श्रान्तिम् अनुभूतवन्तः ।

---------------------------------------------------------------------- ।

१०. द्वारे तिष्ठन्तः भटाः प्रवेशं निवारितवन्तः ।

---------------------------------------------------------------------- ।

### १.१.८. शतृ (पु.) - चतुर्थीविभक्तिः

रामः कश्चन उदारः धनिकः । गुणग्राही सः प्रयत्नशीलान् दृष्ट्वा पारितोषिकं ददाति । सः कस्मै पारितोषिकं दत्तवान् इति अधः सूच्यरूपेण उक्तम् अस्ति ।

तन्नाम पारितोषिकस्वीकर्ता प्रथमाविभक्त्या सूचितः । भवन्तः तत्र चतुर्थीविभक्तिं प्रयुज्य वाक्यानि कुर्वन्तु ।




१. रामः वेगेन धावते बालकाय पारितोषिकं दत्तवान् ।

२. रामः ---------------------------------- " " ।

३. " ---------------------------------- " " ।

४. " ---------------------------------- " " ।

५. " ---------------------------------- " " ।

६. " ---------------------------------- " " ।

७. " ---------------------------------- " " ।

८. " ---------------------------------- " " ।

९. " ---------------------------------- " " ।

१०. " ---------------------------------- " " ।

## १.१.९. शतृ (पु.) - पञ्चमीविभक्तिः

अधः भयहेतवः भीताः च निर्दिष्टाः । तदाधारेण कः कस्मात् भीतः इति लिखन्तु ।

| भयहेतवः | भीताः |
| --- | --- |
| आगच्छन् व्याघ्रः | पान्थः |
| सर्पन् सर्पः | गृहिणी |
| गर्जन् सिंहः | बालकः |
| भषन् शुनकः | सः |
| ज्वलन् अग्निः | शिशुः |
| ताडयन् अध्यापकः | छात्राः |
| लुण्ठयन्तः लुण्ठाकाः | प्रयाणिकाः |
| निन्दन्तः दुष्टाः | सज्जनः |
| चोरयन्तः चोराः | जनाः |
| रक्षन्तः आरक्षकाः | चोराः |

१. आगच्छतः व्याघ्रात् पान्थः भीतः ।

२. ---------------------------------------------------- भीता ।

३. ---------------------------------------------------------- ।

४. ---------------------------------------------------------- ।

५. ---------------------------------------------------------- ।

६. ------------------------------------------------------------ ।

७. ------------------------------------------------------------ ।

८. ------------------------------------------------------------ ।

९. ------------------------------------------------------------ ।

१०. ------------------------------------------------------------ ।

## १.१.१०. शतृ (पु.) - षष्ठीविभक्तिः

अधः कानिचन वाक्यानि निर्दिष्टानि । तेषां परिवर्तनं कृत्वा पुनः लेखनीयम् । परिवर्तनक्रमः उदाहरणे प्रदर्शितः अस्ति । तदनुगुणं वाक्यानि लिखन्तु ।

उदा - गच्छन् बालकः सुन्दरः ।
गच्छतः बालकस्य सौन्दर्यं पश्यतु ।

१. क्रीडन् शिशुः चतुरः ।

------------------------------------------ चातुर्यं पश्यामि ।

२. पतन् श्रीधरः मूर्खः ।

------------------------------------------ मूर्खतां पश्यतु ।

३. धावन् बालकः उन्नतः ।

------------------------------------------ औन्नत्यं पश्यतु ।

४. पूजयन् अर्चकः महाभक्तः ।

------------------------------------------ भक्तिं पश्यतु ।

५. ध्यायन् मुनिवरः तेजस्वी ।

------------------------------------------ तेजस्वितां पश्यतु ।

६. विहरन् वृद्धः गम्भीरः।

------------------------------------ गाम्भीर्यं पश्यतु।

७. यच्छन्तः धनिकाः उदाराः।

------------------------------------ औदार्यं पश्यतु।

८. खनन्तः कर्मकरा श्रद्धालवः।

------------------------------------ श्रद्धां पश्यतु।

९. पठन्तः छात्राः बुद्धिमन्तः।

------------------------------------ बुद्धिमत्तां पश्यतु।

१०. कार्यं कुर्वन्तः जनाः कुशलाः।

------------------------------------ कौशलं पश्यतु।

### १.१.११. शतृ (पु.) - सप्तमीविभक्तिः

समुदायात् कस्यचित् पृथङ्निर्देशः यदा भवति तदा समुदायवाचकस्य पदस्य सप्तमी (षष्ठी वा) भवति। अधः समुदायवाचकानि शत्रन्त - विशेषणयुक्तानि पदानि, पृथक्कृताः व्यक्तयः च निर्दिष्टाः। एतदाधारेण उदाहरणानुसारं वाक्यानि रचयन्तु।

| समुदायवाचिनः | | पृथक्कृताः |
|---|---|---|
| धावन्तः बालकाः | - | रामः प्रथमः। |
| अभिनयन्तः नटाः | - | कुमारः श्रेष्ठः। |
| पठन्तः छात्राः | - | हरीशः बुद्धिमान्। |
| क्रीडन्तः बालकाः | - | गोविन्दः पटुः। |
| गायन्तः गायकाः | - | मुरली विशारदः। |
| कार्यं कुर्वन्तः उद्योगिनः | - | कृष्णः समीचीनः। |
| गच्छन्तः जनाः | - | अचलः अग्रणीः खलु ? |
| नद्यां विहरन्तः पक्षिणः | - | हंसः सुन्दरः। |
| तरन्तः तरुणाः | - | अरुणः तरणपटुः। |
| अलङ्कुर्वन्तः जनाः | - | मोहनः निपुणः। |
| लिखन्तः एते | - | रविः तीक्ष्णमतिः। |

उदा - धावत्सु बालकेषु रामः प्रथमः।

१. ------------------------------------------------------------------------------------ ।

२. ------------------------------------------------------------------------------------ ।

३. ------------------------------------------------------------------------------------ ।

४. ------------------------------------------------------------------------------------ ।

५. ------------------------------------------------------------------------------------ ।

६. ------------------------------------------------------------------------------------ ।

७. ------------------------------------------------------------------------------------ ।

८. ------------------------------------------------------------------------------------ ।

९. ------------------------------------------------------------------------------------ ।

१०. ------------------------------------------------------------------------------------ ।

### १.१.१२. शतृ (पु.) - मिश्रवाक्यानि

वाक्यान्ते आवरणे दत्तानां शब्दानाम् उचितैः रूपैः रिक्तस्थानानि पूरयन्तु।

यथा - तत्र ------------------- बालकस्य नाम सुरेशः। (क्रीडन्)
तत्र क्रीडतः बालकस्य नाम सुरेशः।

१. उपाहारं ---------------------------------- छात्राय पानीयं ददातु। (खादन्)

२. पाठं ------------------------------------------- रामेण प्रश्नः कृतः। (लिखन्)

३. ---------------------------------- अध्यापकं गृहं प्रति आह्वयामि। (गच्छन्)

४. क्रीडाङ्गणे -------------------------- बालकैः कोलाहलः क्रियते। (क्रीडन्तः)

५. कार्यालये कार्यं -------------- उद्योगिभ्यः उत्कोचः न दातव्यः। (कुर्वन्तः)

६. आसन्दे ------------------------- छात्रम् अध्यापकः तर्जयति। (उपविशन्)

७. वृक्षात् -------------------------------- वानरान् जनाः पश्यन्ति। (पतन्तः)

८. रात्रौ --------------------------------- बालकेषु कियत् धैर्यम्! (गच्छन्तः)

९. पानीयं ------------------------------ जनानां गणना करणीया। (पिबन्तः)

१०. पक्षपातं ------------------------------------ एतस्मै सः क्रुद्धति। (कुर्वन्)

११. पत्रं ----------------------------- छात्रैः गृहपाठः न लिखितः। (लिखन्तः)

१२. आकाशात् -------------------------- वृष्टिबिन्दुभ्यः दूरं गच्छतु। (पतन्तः)

१३. अत्र --------------------------------- सर्वेभ्यः धनं स्वीकुर्मः। (आगच्छन्तः)

१४. उपवासम् ------------------------------ मुनिना मौनं स्थितम्। (आचरन्)

१५. चित्रं ------------------------- बालकानां नामानि न जानामि। (लिखन्तः)

## १.२. शतृ - स्त्रीलिङ्गे

क्रियापदस्य वर्तमानकालस्य प्रथमपुरुषबहुवचनरूपं दृष्ट्वा शतृ-प्रत्ययान्तस्य पुंल्लिङ्गरूपं ज्ञातुं शक्यते इति वयं ज्ञातवन्तः। पठन्ती, लिखन्ती इत्यादीनि स्त्रीलिङ्गरूपाणि। अधस्तनम् उदाहरणद्वयं पश्यन्तु -

१. बालिका **पठन्ती** अस्ति।

२. बालिका पाकं **कुर्वती** अस्ति।

प्रथमवाक्ये 'पठन्ती' इत्यत्र 'ती'तः पूर्वं नकारः श्रूयते। किन्तु द्वितीयवाक्ये 'कुर्वती' इत्यत्र नकारः न श्रूयते। 'कुर्वन्ती' इति वदामः चेत् दोषः। एवं तर्हि नकारः कुत्र भवति, कुत्र न भवति - इति कथं ज्ञातव्यम्? अत्र कश्चन सरलोपायः अस्ति। सोपानक्रमेण तं जानीयाम तावत्।

'पठति' 'लिखति' 'करोति' इत्यादीनि वर्तमानकालरूपाणि वयं जानीमः। प्रथमपुरुषैकवचनान्तानि रूपाणि एतानि। एतेषु 'ति' अन्ते श्रूयते। एतस्मात् ('ति' तः) पूर्वं कः स्वरः अस्ति इति प्रथमं ज्ञातव्यम् अस्माभिः।

### १.२.१. <u>अ.</u> - 'ति' तः पूर्वं कः स्वरः ?

अधस्तनक्रियापदरूपेषु स्थितान् वर्णान् पृथक्कृत्य लिखन्तु।

यथा - पठति - प् + अ + ठ् + अ + त् + इ

१. लिखति - ल् + --------- + ख् + --------- त् + ---------

२. करोति - क् + --------- + र् + --------- त् + ---------

३. पश्यति - ---- + ---- + ---- + ---- + ---- + ---- + ----

४. क्रीडति - --------------------------------------------------------

५. शृणोति - --------------------------------------------------------

६. भक्षयति - --------------------------------------------------------

७. गायति - --------------------------------------------------------

८. जानाति - ------------------------------------------------------------

९. ददाति - ------------------------------------------------------------

१०. शक्नोति - ------------------------------------------------------------

आ. - अधोनिर्दिष्टेषु उदाहरणेषु 'ति' तः पूर्वं कः स्वरः अस्ति इति लिखन्तु ।

यथा - वदति - (वद् + अ + ति - अकारः)

१. गच्छति - (गच्छ् + --------- + ति - ------------------)

२. जानाति - (----------- + --------- + ति - ------------------)

३. करोति - (----------- + --------- + ति - ------------------)

४. गृह्णाति - (----------- + --------- + ति - ------------------)

५. स्नाति - (----------- + --------- + ति - ------------------)

६. आप्नोति - (----------- + --------- + ति - ------------------)

७. कुप्यति - (----------- + --------- + ति - ------------------)

८. रचयति - (----------- + --------- + ति - ------------------)

९. रोदिति - (----------- + --------- + ति - ------------------)

१०. चिनोति - (----------- + --------- + ति - ------------------)

### १.२.२. नुम्व्यवस्था - शतृप्रत्यये स्त्रीलिङ्गे

**'ति' प्रत्ययतः पूर्वं ह्रस्वः अकारः अस्ति चेत् शतरि स्त्रीलिङ्गे नकारः (नुम्) करणीयः । अन्यः कोऽपि स्वरः अस्ति चेत् (आ, इ, उ, ओ इत्यादयः) नकारः (नुम्) न करणीयः ।** एषः मार्गः आश्रितः चेत् सर्वत्र विना दोषं व्यवहारं कर्तुं शक्नुमः* ।

---

* पूर्वोक्तः नियमः आश्रितः चेत् निर्दोषव्यवहारमात्रं शक्यते । कुत्र नुम् न भवति कुत्र विकल्पेन भवति - इत्यादिकं ज्ञातव्यं चेत् गणव्यवस्थादिकं व्याकरणसूत्रद्वयं च ज्ञातव्यं भवति ।

**अ.** अधः निर्दिष्टेषु शब्देषु 'ति' प्रत्ययतः पूर्वं कः स्वरः अस्ति इति निर्दिश्य पुंल्लिङ्गरूपम् अपि निर्दिश्य स्त्रीलिङ्गे नुम् भवति वा न वा इति निर्णीय शत्रन्तस्त्रीलिङ्गरूपं निर्दिशन्तु ।

| वर्तमाने - एकवचनरूपम् | 'ति' तः पूर्वं स्थितः स्वरः | शत्रन्तपुंल्लिङ्गरूपम् | शत्रन्तस्त्रीलिङ्ग-रूपम् |
|---|---|---|---|
| उदा - वदति | अकारः | वदन् | वदन्ती |
| १. शृणोति | --------------- | --------------- | --------------- |
| २. प्रेषयति | --------------- | --------------- | --------------- |
| ३. उत्तिष्ठति | --------------- | --------------- | --------------- |
| ४. स्मरति | --------------- | --------------- | --------------- |
| ५. शक्नोति | --------------- | --------------- | --------------- |
| ६. निन्दति | --------------- | --------------- | --------------- |
| ७. क्रीणाति | --------------- | --------------- | --------------- |
| ८. आह्वयति | --------------- | --------------- | --------------- |
| ९. पृच्छति | --------------- | --------------- | --------------- |
| १०. स्वीकरोति | --------------- | --------------- | --------------- |

**आ.** अधोनिर्दिष्टानां क्रियापदानां शत्रन्तस्त्रीलिङ्गरूपं निर्दिशन्तु ।

उदा - i) हरति - (हरन्ती)    ii) करोति - (कुर्वती)

१. पश्यति - (                    )    २. क्रीडति - (                    )

३. नमस्करोति - (                    )    ४. जानाति - (                    )

५. भक्षयति - (                    )    ६. सङ्गृह्णाति - (                    )

७. स्नाति - (                    )    ८. याति -    (                    )

९. अलङ्करोति - (                    )    १०. छिनत्ति - (                    )

११. गणयति -(                    )    १२. ददाति - (                    )

१३. बिभेति - (                    )    १४. सञ्चिनोति - (                    )

१५. प्राप्नोति - (                    )    १६. बध्नाति - (                    )

१७. रोदिति - (                    )    १८. कुप्यति - (                    )

१९. रचयति - (                    )    २०. आरोहति - (                    )

**ङ.** अधः कानिचन शुद्धानि अशुद्धानि च शत्रन्तस्त्रीलिङ्गरूपाणि निर्दिष्टानि सन्ति। तेषां मूलं वर्तमानकाल- प्रथमपुरुषैकवचनरूपं लिखित्वा तत्र 'ति' तः पूर्वं कः स्वरः इति निर्दिश्य, तत् रूपं शुद्धं वा अशुद्धं वा इति निर्दिशन्तु।

| शत्रन्तरूपं (स्त्रीलिङ्गे) | वर्तमानकाले - प्र. पु. एकवचनान्तं रूपम् | 'ति' तः पूर्वं स्थितः स्वरः | शुद्धम्/अशुद्धम् |
|---|---|---|---|
| उदा - i) कुर्वन्ती | करोति | ओकारः | अशुद्धम् |
| ii) गच्छन्ती | गच्छति | ह्रस्वः अकारः | शुद्धम् |
| १. शृण्वन्ती | --------------- | --------------- | ------------- |
| २. जानन्ती | --------------- | --------------- | ------------- |
| ३. क्रीणन्ती | --------------- | --------------- | ------------- |
| ४. गणयन्ती | --------------- | --------------- | ------------- |
| ५. प्राप्नुवन्ती | --------------- | --------------- | ------------- |
| ६. तिष्ठन्ती | --------------- | --------------- | ------------- |
| ७. शक्नुवन्ती | --------------- | --------------- | ------------- |
| ८. परिशीलयन्ती | --------------- | --------------- | ------------- |

| शत्रन्तरूपं (स्त्रीलिङ्गे) | वर्तमानकाले - प्र. पु. एकवचनान्तं रूपम् | 'ति' तः पूर्वं स्थितः स्वरः | शुद्धम्/अशुद्धम् |
|---|---|---|---|
| ९. व्यवहरन्ती | --------------- | --------------- | ------------ |
| १०. अनुगृह्णन्ती | --------------- | --------------- | ------------ |
| ११. अन्विष्यन्ती | --------------- | --------------- | ------------ |
| १२. स्मरती | --------------- | --------------- | ------------ |
| १३. प्रविशन्ती | --------------- | --------------- | ------------ |
| १४. अवरोहन्ती | --------------- | --------------- | ------------ |
| १५. बध्नन्ती | --------------- | --------------- | ------------ |

१.२.३. **एषा किं कुर्वती अस्ति ?**

उदा -  क्रीडति

एषा क्रीडन्ती अस्ति।



१. तरुणी हसति।

-------------------------------------------------- ।



२. नर्तकी नृत्यति।

-------------------------------------------------- ।



३. महिला पश्यति ।

------------------------------------------------ ।



४. छात्रा शृणोति ।

------------------------------------------------ ।



५. गायिका गायति ।

------------------------------------------------ ।



६. बालिका चालयति ।

------------------------------------------------ ।



७. वृद्धा पठति ।

------------------------------------------------ ।



८. गृहिणी सीव्यति ।

------------------------------------------------ ।



९. युवतिः खादति ।

------------------------------------------------ ।



१०. उषा धावति ।

------------------------------------------------ ।



११. अधिकारिणी चिन्तयति ।

------------------------------------------------ ।



१२. सुन्दरी तिलकं धरति ।

------------------ तिलकं ------------------------ ।

## १.२.४. शतृ (स्त्री.) - प्रथमाविभक्तिः

शत्रन्तरूपं प्रयुज्य उदाहरणानुसारम् वाक्यद्वयं संयोज्य एकं वाक्यं कुर्वन्तु ।

| उदा - | नर्तकी नृत्यति । जनान् आनन्दयति । |
|---|---|
| | नर्तकी नृत्यन्ती जनान् आनन्दयति । |

१. माता गायति । पाकं करोति ।

------------------------------------------------------------------- ।

२. बालिका स्नाति । काकलीं गायति ।

------------------------------------------------------------------- ।

३. अध्यापिका लिखति । छात्रान् बोधयति ।

------------------------------------------------------------------- ।

४. बालिका रोदिति । शालां गच्छति ।

------------------------------------------------------------------- ।

५. कर्मकरी वस्त्राणि प्रक्षालयति । स्वामिनीम् आह्वयति ।

------------------------------------------------------------------- ।

६. सीता मातरम् अन्विष्यति । सर्वत्र भ्रमति ।

------------------------------------------------------------------------ ।

७. मयूरी मेघं पश्यति । केकां करोति ।

------------------------------------------------------------------------ ।

८. गृहिण्यः पाककार्यं स्मरन्ति । जल्पनं स्थगयन्ति ।

------------------------------------------------------------------------ ।

९. विद्यार्थिन्यः श्लोकार्थं जानन्ति । तृप्तिं प्राप्नुवन्ति ।

------------------------------------------------------------------------ ।

१०. शिक्षिकाः छात्रान् पृच्छन्ति । कोपेन तर्जयन्ति ।

------------------------------------------------------------------------ ।

११. गोपालिकाः क्षीरं दुहन्ति । कृष्णं स्मरन्ति ।

------------------------------------------------------------------------ ।

१२. पिपीलिकाः शर्करां पश्यन्ति । वेगेन धावन्ति ।

------------------------------------------------------------------------ ।

### १.२.५. शतृ (स्त्री.) - द्वितीयाविभक्तिः

आवरणे दत्तानां क्रियापदानां शत्रन्तस्त्रीलिङ्गरूपं विशेष्यानुगुणतया प्रयुज्य वाक्यानि लिखन्तु ।

| उदा - | श्लोकं (पठति) ---------- गौरीम् अहम् आहूतवान् ।<br>श्लोकं पठन्तीं गौरीम् अहम् आहूतवान् । |
|---|---|

१. (पठति) ---------------------------------------- पुत्रीं दृष्ट्वा पिता सन्तुष्टः ।

२. (धावति) ------------------------------------- हरिणीं रामः अनुसृतवान् ।

३. जलम् (आनयति) ------------------------ वीणां शारदा अपि अनुसरति ।

४. क्रीडार्थं (गच्छति) -------------------------------- पुत्रीं माता आह्वयति।

५. सखीं (स्मरति) -----,-------------------------- अनुजाम् अग्रजः दृष्टवान्।

६. वस्तूनि (चोरयति) ------------------------- कर्मकरीं स्वामिनी दृष्टवती।

७. दधिविक्रयणं (करोति) ----------------------- महिलां वृद्धा आहूतवती।

८. अनुजः (खादति) ----------------------------------- अग्रजां हासितवान्।

९. माता (क्रीडति) ------------------ पुत्रीम् आहूय आपणं प्रति प्रेषितवती।

१०. गीता (प्रक्षालयति) ---------------------------------- कर्मकरीं पृष्टवती।

११. फलानि (खादन्ति) ----------------- वानरीः दृष्ट्वा बालिकाः हसितवत्यः।

१२. तृणानि (चरन्ति) -------------------------------- धेनूः गोपालः रक्षति।

१३. पूजां (कुर्वन्ति) ------------------------------ महिलाः देवः अनुगृह्णाति।

१४. अध्यापिका उत्तरं (जानन्ति) ---------------------- विद्यार्थिनीः पृष्टवती।

१५. गीतं (शृण्वन्ति) -------------------------------- पुत्रीः पिता तर्जितवान्।

## १.२.६. शतृ (स्त्री.) - तृतीयाविभक्तिः

अधः दत्तानां सूच्यशब्दानां साहाय्येन कया/काभिः किं कृतम् इति लिखन्तु।

| उदा - | गच्छन्ती महिला - हसितम् |
|---|---|
| | गच्छन्त्या महिलया हसितम्। |

१. गीतं स्मरन्ती सा - सम्यक् न गीतम्।

---------------------------------------------------------------------------- ।

२. लिखन्ती छात्रा - मध्ये चिन्तनं कृतम्।

---------------------------------------------------------------------------- ।

३. मरीचिकां खादन्ती बालिका - रोदनं कृतम् ।

------------------------------------------------------------------------ ।

४. दीर्घवाक्यं वदन्ती सा - दोषः कृतः ।

------------------------------------------------------------------------ ।

५. सम्भाषणं कुर्वत्यः ताः - मार्गः विस्मृतः ।

------------------------------------------------------------------------ ।

६. गीतं शृण्वती अनुजा - निद्रा कृता ।

------------------------------------------------------------------------ ।

७. जल्पनं कुर्वत्यः गृहिण्यः - गृहकार्यं विस्मृतम् ।

------------------------------------------------------------------------ ।

८. तृणं चरन्त्यः धेनवः - स्ववत्सः स्मृतः ।

------------------------------------------------------------------------ ।

९. भक्ष्याणि खादन्त्यः महिलाः - बहु सम्भाषणं कृतम् ।

------------------------------------------------------------------------ ।

१०. चर्चां कृर्वत्यः ताः - शीघ्रं न गतम् ।

------------------------------------------------------------------------ ।

११. आकाशवाणीं शृण्वती सा - खादनं विस्मृतम् ।

------------------------------------------------------------------------ ।

१२. क्रीडान्त्यः विद्यार्थिन्यः - उच्चैः हसितम् ।

------------------------------------------------------------------------ ।

१३. शाटिकां पश्यन्त्यः महिलाः - समयः न ज्ञातः ।

------------------------------------------------------------------------ ।

## १.२.७. शतृ (स्त्री.) - चतुर्थीविभक्तिः

नलिन्याः गृहे कश्चन विशेषकार्यक्रमः अस्ति । तदर्थं बान्धवाः बहवः उपस्थिताः सन्ति । नलिन्त्याः अम्बा कस्यै किं दातव्यम् इति नलिनीम् उक्तवती । तत् अधः सूचितम् अस्ति । तदाधारेण भवन्तः वाक्यानि रचयन्तु ।

| कस्यै | किं दातव्यम् ? |
|---|---|
| १. जल्पन्ती भगिनी | स्यूतः |
| २. स्तोत्रं पठन्ती पितामही | फलानि |
| ३. पाकं कुर्वती भ्रातृजाया | पात्रम् |
| ४. केशं प्रसाधयन्ती अग्रजा | केशसूच्यः |
| ५. वार्तां शृण्वती मातुलानी | पानीयम् |
| ६. भूमिं मार्जयन्ती कर्मकरी | मार्जनवस्त्रम् |
| ७. बहिः पश्यन्ती सखी | क्षीरम् |
| ८. स्वगृहं गच्छन्ती प्रतिवेशिनी | कुङ्कुमम् |
| ९. देवं नमस्कुर्वती पितृव्या | पुष्पाणि |
| १०. मार्गे क्रीडन्ती अनुजा | कन्दुकम् |
| ११. काकलीं गायन्ती सा | किमपि कार्यम् |

१. जल्पन्त्यै भगिन्यै स्यूतं ददातु ।

२. ------------------------------------------------------------------------ ।

३. ------------------------------------------------------------------------ ।

४. ------------------------------------------------------------------------ ।

५. ------------------------------------------------------------------------ ।

६. ---------------------------------------------------------------------------------------- ।

७. ---------------------------------------------------------------------------------------- ।

८. ---------------------------------------------------------------------------------------- ।

९. ---------------------------------------------------------------------------------------- ।

१०. ---------------------------------------------------------------------------------------- ।

११. ---------------------------------------------------------------------------------------- ।

### १.२.८. शतृ (स्त्री.) - पञ्चमीविभक्तिः

आवरणे त्रीणि रूपाणि दत्तानि सन्ति। तेषु उचितं रूपं चित्वा रिक्तं स्थानं पूरयन्तु।

उदा – मार्गे ------------- शुनकीतः अहं भीतः। (अटन्त्याः/अटन्त्या/अटन्त्यै)
मार्गे अटन्त्याः शुनकीतः अहं भीतः।

१. -------------------------- परीक्षातः मम भगिन्याः भीतिः।
(आगच्छन्त्याः/आगच्छन्त्या/आगच्छन्त्यै)

२. ------------ नदीतः जनाः जलं नयन्ति। (प्रवहन्ती/प्रवहन्त्याः/प्रवहत्या)

३. --------------------- मल्लिकातः मधुमक्षिका मधु पिबति।
(विकसन्ती/विकसत्यः/विकसन्त्याः)

४. भक्त्या ------------------- देवतातः वरं प्राप्नोमि।
(तुष्यन्त्याः/तुष्यत्याः/तुष्यन्त्या)

५. ---------------- व्याघ्रीतः पान्थाः भीताः। (गर्जत्याः/गर्जन्त्याः/गर्जन्त्यै)

६. -------------------- सखीतः अहं लेखनीं स्वीकृतवती।
(उपविशन्त्याः/उपविशन्त्यां/उपविशन्ती)

७. शिरोवेदनां ------------------- वार्ताभ्यः सः जुगुप्सते।
(जनयन्तीभ्यः/जनयन्तीः/जनयन्त्यः)

८. ---------------------------------------- आपत्तिभ्यः भगवान् मां रक्षति ।
(आगच्छद्भ्यः/आगच्छन्तीभ्यः/आगच्छतीभ्यः)

९. अध्यापकः ------------------------------ छात्राभ्यः अलसाः दूरीकरोति ।
(पठन्त्यः/पठन्तीः/पठन्तीभ्यः)

१०. ------------------------------------------ महिलाभ्यः सः बालकः भीतः ।
(तर्जयन्त्यः/तर्जयन्तीभ्यः/तर्जयन्त्याः)

## १.२.९. शतृ (स्त्री.) - षष्ठीविभक्तिः

एतत्/एषः/एषा कस्याः इति वाक्यरूपेण निर्दिशन्तु । सूच्यशब्दाः तु अधः निर्दिष्टाः सन्ति ।

उदा - क्रीडन्ती बालिका - लेखनी ।
क्रीडन्त्याः बालिकायाः लेखनी एषा ।

१. गच्छन्ती महिला - पुस्तकम् ।

------------------------------------------------------------------------ ।

२. हसन्ती सा - पुत्रः ।

------------------------------------------------------------------------ ।

३. अष्टममार्गे निवसन्ती सा - आपणः ।

------------------------------------------------------------------------ ।

४. निद्रां कुर्वती भगिनी - स्यूतः ।

------------------------------------------------------------------------ ।

५. जल्पन्ती गृहीणी - गृहम् ।

------------------------------------------------------------------------ ।

६. वस्तूनि क्रीणती एषा - पतिः ।

------------------------------------------------------------------------ ।

७. नृत्यन्त्यः नर्तक्यः – नूपुराणि ।

------------------------------------------------------------------------ ।

८. भाषणं शृण्वत्यः महिलाः-पादरक्षाः ।

------------------------------------------------------------------------ ।

९. गृहकार्यं कुर्वत्यः महिलाः – पाकः ।

------------------------------------------------------------------------ ।

१०. क्रीडन्त्यः बालिकाः – कोलाहलः ।

------------------------------------------------------------------------ ।

## १.२.१०. शतृ (स्त्री.) - सप्तमीविभक्तिः

अधोरेखाङ्कितं प्रथमाविभक्त्यन्तं शत्रन्तस्त्रीलिङ्गपदं तद्विशेषणपदं च तिर्यग्रेखया अपनीय सप्तमीविभक्तिरूपैः रिक्तस्थानं पूरयतु ।

यथा –

पतन्ती पेटिका ---------- ---------- वस्त्राणि सन्ति ।
~~पतन्ती पेटिका~~ - पतन्त्यां पेटिकायां वस्त्राणि सन्ति ।

१. वेगेन प्रवहन्ती नदी ------------------- -------------------- मीनाः सन्ति ।

२. प्रतिदिनम् अत्र आगच्छन्ती एषा ---------- ---------- बहवः गुणाः सन्ति ।

३. नृत्यन्ती नर्तकी ----------------- ----------------- विशेषकौशलम् अस्ति ।

४. कार्यं कुर्वती पुत्री ------------------ ----------------- मातुः विशेषप्रतिः ।

५. पूजयन्ती भक्ता ------------------ ------------------ देवः कृपां प्रदर्शयति ।

६. असत्यं कथयन्ती सा -------------- ------------ मम तु विश्वासः नास्ति ।

७. सम्यक् पठन्त्यः एताः ------------ ------------ का प्रथमस्थानं प्राप्नुयात् ?

८. अकार्यं कुर्वत्यः ताः -------------- -------------- विवेकः सर्वथा नास्ति ।

९. पाठं पठन्त्यः वयम् ------------------- -------------------- नन्दिनी प्रथमा।

१०. श्रद्धया कार्यं कुवत्यः ताः ------------- ------------ दोषं किमर्थं पश्यति भवान् ?

## १.२.११. शतृ (स्त्री.) - मिश्रवाक्यानि

वाक्यान्ते आवरणे दत्तानां शब्दानाम् उचितैः रूपैः रिक्तस्थानानि पूरयन्तु।

यथा - पेटिकायां शाटिकां ---------- पुत्रीं माता आह्वयति। (स्थापयन्ती)
पेटिकायां शाटिकां स्थापयन्तीं पुत्रीं माता आह्वयति।

१. वार्तां --------------------------------- पुत्रीं माता कार्यं वदति। (शृण्वती)

२. ग्रन्थालये ------------------------- बालिकया गृहपाठः स्मर्यते। (पठन्ती)

३. मार्गे अकस्मात् --------------------------- तया वेदना अनुभूता। (पतन्ती)

४. आसन्दे ---------------------- अध्यापिकायै लेखनीं ददातु। (उपविशन्ती)

५. गृहं ---------------------------------- तस्यै विलम्बः न रोचते। (गच्छन्ती)

६. परितः ------------------------------ राधायाः धनस्यूतः नष्टः। (पश्यन्ती)

७. अनुजं -------------------------------- पुत्रीः माता सूचयति। (प्रेषयन्त्यः)

८. फलानि ----------------------- महिलाभिः कोलाहलः कृतः। (खादन्त्यः)

९. कार्यं --------------------------------- स्त्रीभ्यः विरामः न दत्तः। (कुर्वत्यः)

१०. अहोरात्रं --------------------------- बुद्धिमत्यै अलसा असूयति। (पठन्ती)

११. विना कारणम् --------------- अलसायै बुद्धिमती क्रुध्यति। (असूयन्ती)

१२. ---------------------------- भवत्या एवं न करणीयम् आसीत्। (जानती)

१३. कार्यं ------------------ कर्मकरीषु भवत्याः कोपः अनुचितः। (कुर्वत्यः)

१४. देवं ---------------------------------- तासां भक्तिः अपूर्वा। (पूजयन्त्यः)

१५. अङ्गणे --------------------- बालिकाः अध्यापिका आह्वयति। (क्रीडन्त्यः)

## १. ३. शतृ - नपुंसके

'गच्छत्' 'कुर्वत्' 'पतत्' इत्यादीनि शत्रन्तनपुंसकरूपाणि । (प्रथमाविभक्तौ एकवचनान्तानि) एतानि प्रायः पुंल्लिङ्गरूपवत् एव भवन्ति । पुंल्लिङ्गे ('गच्छन्' 'पतन्' इत्यादिषु) अन्ते नकारः श्रूयते, नपुंसके च ('गच्छत्' 'पतत्' इत्यादिषु) तकारः श्रूयते। अतः पुंल्लिङ्गरूपं ज्ञातं चेत् नपुंसकलिङ्गरूपस्य ज्ञानं सुकरम् एव।

'वर्तमानकालस्य प्रथमपुरुषबहुवचनान्तं रूपं दृष्ट्वा वयं शत्रन्तपुंल्लिङ्गरूपं निर्णेतुं शक्नुमः' इति तु वयं जानीमः एव। तेनैव तन्त्रेण नपुंसकरूपाणि अपि ज्ञातव्यानि।

१. ३. १. अधः सूचितानां क्रियापदानां बहुवचनरूपाणि शत्रन्तनपुंसकरूपाणि च यथास्थानं लिखन्तु।

| वर्तमानकाले प्र. पु. ए. व. बहुवचनम् शतृ- (नपु.) | वर्तमानकाले प्र. पु. ए. व. बहुवचनम् शतृ- (नपु.) |
|---|---|
| उदा - गच्छति गच्छन्ति गच्छत् | |
| १. करोति ---------- ---------- | ८. विकसति ---------- ---------- |
| २. शृणोति ---------- ---------- | ९. स्फुरति ---------- ---------- |
| ३. नश्यति ---------- ---------- | १०. आचरति ---------- ---------- |
| ४. भ्रमति ---------- ---------- | ११. उद्गच्छति ---------- ---------- |
| ५. अवतरति ---------- --------- | १२. प्रचलति ---------- ---------- |
| ६. पतति ---------- ---------- | १३. प्रसारयति ---------- ---------- |
| ७. गच्छति ---------- ---------- | १४. जनयति ---------- ---------- |

१.३.२. अ. अधः निर्दिष्टानां वाक्यानां साहाय्येन शत्रन्त-नपुंसकलिङ्ग-रूपयुक्तानि वाक्यानि लिखन्तु।

उदा - मार्गे यानं गच्छति।
मार्गे यानं गच्छत् अस्ति।

१. भवतः अध्ययनं कथं प्रचलति ?

------------------------------------------------------------------------- ।

२. नलिकातः जलं निर्गच्छति।

------------------------------------------------------------------------- ।

३. प्रतिष्ठानं संस्कृतप्रचारं करोति।

------------------------------------------------------------------------- ।

४. मम बुद्धौ वाक्यं स्फुरति।

------------------------------------------------------------------------- ।

५. मम युतकं नश्यति।

------------------------------------------------------------------------- ।

६. इदानीं चिन्तनं प्रचलति।

------------------------------------------------------------------------- ।

आ. शत्रन्त-नपुसंकलिङ्ग-बहुवनचस्य वर्तमानकाल-प्रथमपुरुष-बहुवचनस्य च रूपं समानं दृश्यते।

यथा - i) यानानि गच्छन्ति। - वर्तमानकाल-बहुवचनरूपयुक्तम्।

ii) यानानि गच्छन्ति सन्ति। - शत्रन्त-(नपुं)रूपयुक्तम्।

यत्र शत्रन्तनपुंसकलिङ्गरूपं भवति तस्मिन् वाक्ये क्रियापदम् अपरं भवति एव। यथा - द्वितीये वाक्ये। एतम् अंशं मनसि निधाय बहुवचने क्रियापदरूपस्य शत्रन्त-(नपुं)रूपस्य च भेदः अभिज्ञातव्यः।

अधः निर्दिष्टानां वाक्यानां साहाय्येन शत्रन्त (नपुं) बहुवचनरूपयुक्तानि वाक्यानि लिखन्तु ।

उदा -

| चक्राणि वेगेन भ्रमन्ति । |
| --- |
| चक्राणि वेगेन भ्रमन्ति सन्ति । |

१. उद्याने पुष्पाणि विकसन्ति ।

------------------------------------------------------------------ ।

२. यन्त्राणि उच्चैः शब्दं कुर्वन्ति ।

------------------------------------------------------------------ ।

३. वृक्षात् पर्णानि पतन्ति ।

------------------------------------------------------------------ ।

४. तदीयानि वस्त्राणि शुष्कीभवन्ति ।

------------------------------------------------------------------ ।

५. यानानि गच्छन्ति, पश्यतु ।

------------------------------------------------------------------ ।

**१.३.३** शत्रन्तनपुंसकलिङ्गरूपाणि प्रयुज्य एकं वाक्यं लिखन्तु ।

उदा -

| जलं प्रवहति । शब्दं करोति । |
| --- |
| जलं प्रवहत् शब्दं करोति । |

१. बस्यानं गच्छति । धूमं विसृजति ।

------------------------------------------------------------------ ।

२. वाहनं शब्दं करोति । वेगेन गच्छति ।

------------------------------------------------------------------ ।

३. नयनं स्फुरति। अशुभं सूचयति।

------------------------------------------------------------------------------------ ।

४. मित्रम्* आगच्छति। 'हरिः ओम्' इति कथयति।

------------------------------------------------------------------------------------ ।

५. दूरदर्शनं चित्रं प्रसारयति। जनेषु लोभं जनयति।

------------------------------------------------------------------------------------ ।

६. गणकयन्त्रं गणनां करोति। मम साहाय्यम् आचरति।

------------------------------------------------------------------------------------ ।

७. उपनेत्रम् अधः पतति। खेदं जनयति।

------------------------------------------------------------------------------------ ।

८. वाहनानि धूमं निस्सारयन्ति। परिसरं कलुषीकुर्वन्ति।

------------------------------------------------------------------------------------ ।

९. चक्राणि वेगेन भ्रमन्ति। रटरटाकुर्वन्ति।

------------------------------------------------------------------------------------ ।

१०. युतकानि नश्यन्ति। खेदं जनयन्ति।

------------------------------------------------------------------------------------ ।

**१.३.४.** शत्रन्तनपुंसकलिङ्गरूपाणि प्रथमाविभक्तौ द्वितीयाविभक्तौ च पुंलिङ्गात् भिन्नानि। अन्यासु विभक्तिषु तु पुंलिङ्गवदेव रूपाणि। विशेष्यभूतस्य शब्दस्य लिङ्गं दृष्ट्वा अस्माभिः शत्रन्तरूपस्य लिङ्गं निर्णेतव्यं भवति।

आवरणे दत्तानां शब्दानाम् उचितैः रूपैः रिक्तस्थानानि पूरयन्तु।

उदा -

| --------------- यानात् सः पतितवान्। (गच्छत्) |
|---|
| गच्छतः यानात् सः पतितवान्। |

* 'Friend' इत्यर्थे मित्रशब्दः नपुंसकलिङ्गे एव प्रयोक्तव्यः।

१. बालः वृक्षेभ्यः ------------------------- फलानां सङ्ग्रहं करोति। (पतन्ति)

२. ---------------------------------- पुष्पस्य सौन्दर्यम् अपूर्वम्। (विकसत्)

३. -------------------------------- तस्मिन् याने ५० जनाः सन्ति। (गच्छत्)

४. ---------------------------------------- मित्रेण चिन्तनं कृतम्। (शृण्वत्)

५. उपाहारं --------------------------------- मित्राय पानीयं ददातु। (खादत्)

६. वेगेन ----------------------------------- यानात् मम भीतिः। (आगच्छत्)

७. ---------------------------- यानेभ्यः जनाः बहिः आगच्छन्ति। (तिष्ठन्ति)

८. -------------------------------------------- जले पर्णं पतितम्। (प्रवहत्)

९. भ्रमराः --------------------------- पुष्पेभ्यः मधु सङ्गृह्णन्ति। (विकसन्ति)

१०. शब्दं -------------------------- यानस्य दर्शनात् एव मम कोपः। (कुर्वत्)

११. ---------------------- विमानस्य चक्रं भूमौ घट्टितम् अभवत्। (अवतरत्)

१२. माता --------------------------------- क्षीरे जलं योजितवती। (उद्गच्छत्)

१३. शब्दं ------------------------------- जलयन्त्रेण जलम् उद्धृतम्। (कुर्वत्)

१४. नीरसं चित्रं ------------------------ दूरदर्शनस्य दर्शनेन किं प्रयोजनम्? (प्रदर्शयत्)

१५. -------------------------------------- चक्रस्य एकः भागः नष्टः। (भ्रमत्)

१६. --------------------------------------- व्यजनं भवान् मा स्पृशतु। (चलत्)

१७. बालकः ---------------------------- नक्षत्राणां शोभां पश्यति। (स्फुरन्ति)

१८. ------------------------------------------ पुष्पस्य अहो वर्णः! (विकसत्)

१९. ---------------------------- यानस्य आरोहणार्थं प्रयत्नः मास्तु। (गच्छत्)

२०. घटात् --------------------- जलस्य, ---------------------- आयुषः च सादृश्यम् अस्ति इति कविः वदति। (स्रवत्) (न्यूनीभवत्)

## १.४. एकस्मिन् एव वाक्ये शत्रन्ताः बहवः (पुं/स्त्री/नपुं)

इतः पूर्वं वयं पुंल्लिङ्गे स्त्रीलिङ्गे नपुंसकलिङ्गे च सर्वासु विभक्तिषु यानि उदाहरणानि दृष्टवन्तः तेषु सर्वेषु एकम् एव शत्रन्तरूपम् आसीत्। किन्तु कदाचित् एकस्मिन् एव वाक्ये द्वित्राणि, ततोऽप्यधिकानि वा शत्रन्तरूपाणि अपि भवितुम् अर्हन्ति।

**१.४.१.** आवरणे दत्तानां शत्रन्तरूपाणाम् उचितां विभक्तिं विशेष्यानुगुणम् ऊहित्वा तैः रूपैः रिक्तस्थानानि पूरयन्तु।

(विशेष्याणि अधोरेखया निर्दिष्टानि सन्ति।)

उदा – (रुदती) --------------- (आगच्छन्ती) --------------- पुत्रीं माता उन्नीतवती।

रुदतीम् आगच्छन्तीं पुत्रीं माता उन्नीतवती।

१. (जल्पन्) --------------- (हसन्) --------------- पुत्रं पिता तर्जितवान्।

२. (क्रीडन्तः) --------------- कोलाहलं (कुर्वन्तः) --------------- बालान् सः आहूतवान्।

३. (चिन्तयन्) --------------- (वदन्) --------------- तेन दोषः न कृतः।

४. (हसन्त्यः) --------------- (गच्छन्त्यः) --------------- ताभिः विलम्बः कृतः।

५. (रुदन्) --------------- (आगच्छन्) --------------- बालकाय माता क्रुध्यति।

६. (गायन्ती) --------------- (नृत्यन्ती) --------------- नर्तक्यै पारितोषिकं दत्तम्।

७. (धावन्) --------------- (आगच्छन्) --------------- घोरव्याघ्रात् पान्थः भीतः।

८. वलयम् उपरि (क्षिपन्) -------------------- (गृह्णन्) -------------------- (गच्छन्) --------------- तस्य चातुर्यं पश्यतु।

९. बालकं (तर्जयन्ती) --------------- (ताडयन्ती) --------------- तस्याः धाष्ट्र्यं पश्यतु ।

१०. आकाशं (पश्यन्) --------------------- (चिन्तयन्) --------------------- (गच्छन्) --------------- तस्य पतनं निश्चितम् ।

११. अर्थं (जानत्यः) --------------- (पठन्त्यः) --------------- एतासु काऽपि अनुत्तीर्णा न भवति ।

१२. (हसन्तः) --------------- (जल्पन्तः) --------------- कार्यं (कुर्वन्तः) --------------- एतेषु श्रद्धा नास्ति एव ।

१.४.२. उचितैः शत्रन्तरूपैः रिक्तस्थलानि पूरणीयानि । अत्र साहाय्यार्थम् आवरणे क्रियापदरूपाणि निर्दिष्टानि । तेषां शत्रन्तरूपं प्रथमम् ऊहनीयम् । ततः विशेष्यानुगुणतया शत्रन्तपदस्य लिङ्ग-वचन-विभक्तयः योजनीयाः ।

उदा -

| जल्पनं (करोति) --------------- बालिका (आगच्छति) --------------- अध्यापकं न दृष्टवती ।<br><br>जल्पनं कुर्वती बालिका आगच्छन्तम् अध्यापकं न दृष्टवती । |
|---|

१. भाषणं (करोति) --------------- भाषणकारः (गच्छन्ति) --------------- श्रोतॄन् न लक्षितवान् ।

२. दूरदर्शनं (पश्यति) --------------- महिलया (उद्गच्छति) --------------- क्षीरं न दृष्टम् ।

३. गीतं (शृणोति) --------------- पुत्रं, पाकं (करोति) --------------- माता आहूतवती ।

४. (रोदिति) --------------- बालकाय (हसति) --------------- माता मोदकं दत्तवती ।

५. मन्दं (गच्छति) --------------- मार्जारः (धावति) --------------- मूषकं गृहीतवान् ।

६. फलं (खादति) ----------------- पुत्राय (हसति) ----------------- अम्बया क्षीरं दत्तम् ।

७. विलम्बेन (आगच्छन्ति) ---------------------- छात्रान् तर्जयितुं विलम्बेन (आगच्छति) --------------- अध्यापकस्य कः अधिकारः ?

८. (तपति) --------------------- सूर्यस्य आतपात् पीडिताः जनाः गृहं गत्वा (चलति) --------------- व्यजनस्य अधः उपविशन्ति ।

९. (क्रीडन्ति) ---------------- बालकैः (प्रवहति) ---------------- नद्यां शिला पातिता ।

१०. (हसति) ------------------ मित्रस्य कोषात् (पतति) ------------------- लेखनीम् अहं गृहीतवान् ।

११. (याचति) --------------------------- भिक्षुकाय धनं ददातु इति (पठति) --------------- पतिः पाकं (करोति) --------------- पत्नीम् उक्तवान् ।

१२. (क्रीडन्ति) ----------------- बालकेभ्यः जलं (यच्छति) ----------------- अम्बायाः साहाय्यं पुत्रः कृतवान् ।

१३. शाकं (कर्तयति) ---------------- गृहिण्या (उद्गच्छति) ---------------- क्षीरं न दृष्टम् ।

१४. पाठं (पाठयति) ----------------- पिता दोषं (करोति) ------------------ पुत्रं ताडितवान् ।

१५. चलनचित्रं (पश्यन्ति) ---------------- जनाः (नृत्यति) ----------------- नायकं दृष्ट्वा सन्तुष्टाः ।

१६. (क्रीडन्ति) ---------------------- बालकाः (पठति) ----------------------- प्राध्यापकस्य अवधानस्य भङ्गं कृतवन्तः ।

१७. तृणं (चरति) ---------------------- धेनुः (दशति) ---------------------- मक्षिकां पुच्छेन निवारितवती ।

१८. वत्से, (पठति) -------------------- अनुजं, (लिखति) -------------------- अग्रजां, (स्नाति) -------------- अग्रजं च भोजनार्थम् आह्वयतु ।

# २. शानच्प्रत्ययः

## २.१. शानच् - कर्तरि

वर्तमानार्थे आत्मनेपदिधातूनां शानच्प्रत्ययः भवति । (परस्मैपदिनां शतृप्रत्ययः भवति इति तु पूर्वम् एव ज्ञातम् ।) 'शानच्'प्रत्यये 'आन' इति भागः अवशिष्यते । शानजन्तरूपाणि यथा -

वर्धमानः, कम्पमाना, वन्दमानम् इत्यादयः।

अधस्तनम् उदाहरणद्वयं पश्यन्तु -

i) बालकः वर्धमानः अस्ति ।

ii) वृद्धः शयानः अस्ति ।

प्रथमे उदाहरणे 'मान' इति रूपं दृश्यते । द्वितीये उदाहरणे 'आन' इत्येतावत् एव दृश्यते । तन्नाम - प्रथमे उदाहरणे (म् + आन = मान) मकारः अधिकतया श्रूयते । एषः मकरः 'मुक्' - आगमसम्बन्धी । एवं च शानजन्तरूपं ज्ञातव्यं चेत् मकारः (मुगागमः) कुत्र करणीयः,कुत्र न करणीयः इति प्रथमं ज्ञातव्यम् ।

शत्रन्ते स्त्रीलिङ्गे 'कुत्र नकारः (नुम्) करणीयः, कुत्र न करणीयः' इति निर्णयार्थं भवन्तः वर्तमानकालक्रियापदस्य प्रथमपुरुषैकवचनस्य रूपे 'ति'प्रत्ययतः पूर्वं कः स्वरः अस्ति इति दृष्टवन्तः खलु ? तथैव शानजन्तरूपे मकार(मुगागम)विषये अपि । 'कम्पते' 'वर्धते' 'क्रीणीते' इत्यादिषु अन्ते 'ते' दृश्यते । **'ते' तः पूर्वं यदि ह्रस्वः अकारः अस्ति तर्हि शानजन्तरूपे मकारः (मुक्) योजनीयः । ह्रस्वाकारभिन्नः अन्यः कोऽपि स्वरः अस्ति चेत् मकारः (मुक्) न योजनीयः । एषः मार्गः आश्रितः चेत् कुत्रापि दोषः न भवति ।**

उदाहरणं पश्याम तावत् - i) कम्पते (कम् + अ + ते) इत्यत्र 'ते' तः पूर्वं ह्रस्वः अकारः अस्ति । अतः अत्र मकारः (मुक्) योजनीयः । 'कम्पते' इत्यस्य शानजन्तरूपं 'कम्पमानः' इति । एवम् एव वर्धमानः (वर्धते), वन्दमानः (वन्दते), यतमानः (यतते) इत्यादीनि अपि ।

ii) 'क्रीणीते' (क्रीण् + ई + ते) इत्यत्र 'ते'तः पूर्वम् ईकारः अस्ति । (ह्रस्वः अकारः नास्ति ।) अतः मकारः (मुक्) न योजनीयः । 'क्रीणीते' इत्यस्य शानजन्तं

रूपं 'क्रीणानः' इति। एवम् एव भुञ्जानः (भुङ्क्ते), शयानः (शेते), दधानः (धत्ते) इत्यादीनि अपि।

वर्तमानकालस्य प्रथमपुरुष-बहुवचनरूपं दृष्टं चेत् शानजन्तरूपस्य ऊहनं सुलभम्।

| यथा - | | | | |
|---|---|---|---|---|
| i) | वर्धते - (बहु) - | वर्धन्ते - (शानच्) - | वर्धमानः। |
| ii) | चिनुते - " - | चिन्वते - " - | चिन्वानः। |
| iii) | कुरुते - " - | कुर्वते - " - | कुर्वाणः। |
| iv) | भुङ्क्ते - " - | भुञ्जते - " - | भुञ्जानः। |

२.१.१ अधोनिर्दिष्टानां क्रियापदानां बहुवचनरूपाणि, एकवचने 'ते'तः पूर्वं कः स्वरः अस्ति इति, शानजन्तरूपाणि च लिखन्तु।

| क्रियापदम् (वर्तमानकाले ए. व.) | बहुवचनम् | एकवचने 'ते' तः पूर्वं कः स्वरः | शानजन्तरूपम् (पुं/स्त्री/नपुं) |
|---|---|---|---|
| उदा - वन्दते | वन्दन्ते | ह्रस्वः अकारः | वन्दमानः/ना/नम् |
| १. कम्पते | ------------ | ---------------- | --------------- |
| २. अधीते | ------------ | ---------------- | --------------- |
| ३. युध्यते | ------------ | ---------------- | --------------- |
| ४. वर्धते | ------------ | ---------------- | --------------- |
| ५. चिनुते | ------------ | ---------------- | --------------- |
| ६. आद्रियते | ------------ | ---------------- | --------------- |
| ७. म्रियते | ------------ | ---------------- | --------------- |
| ८. भुङ्क्ते | ------------ | ---------------- | --------------- |

| क्रियापदम् (वर्तमानकाले ए. व.) | बहुवचनम् | एकवचने 'ते' तः पूर्वं कः स्वरः | शानजन्तरूपम् (पुं/स्त्री/नपुं) |
|---|---|---|---|
| ९. प्रयुङ्क्ते | ------------ | ---------------- | --------------- |
| १०. कुरुते | ------------ | ---------------- | --------------- |
| ११. तनुते | ------------ | ---------------- | --------------- |
| १२. क्रीणीते | ------------ | ---------------- | --------------- |
| १३. गृह्णीते | ------------ | ---------------- | --------------- |
| १४. जानीते | ------------ | ---------------- | --------------- |
| १५. प्रार्थयते | ------------ | ---------------- | --------------- |

२.१.२. आवरणे दत्तानां क्रियापदानां शानजन्तरूपैः रिक्तस्थलानि पूरयन्तु।

उदा –

------------ सः ऐश्वर्यं प्राप्तवान्। (वर्धते)
वर्धमानः सः ऐश्वर्यं प्राप्तवान्।

१. ---------------------------- सः वरं प्राप्तवान्। (वन्दते)

२. --------------------------- सा धनं स्मृतवती। (क्रीणीते)

३. -------------------- अतिथिः तृप्तिं प्रकटितवान्। (भुङ्क्ते)

४. ----------------------- नक्षत्रं भूमौ पतितम्। (प्रकाशते)

५. ----------------- अध्यापकः सन्तोषं प्राप्तवान्। (परीक्षते)

६. --------------------------- बालिका स्वप्नं दृष्टवती। (शेते)

७. --------------------- कन्या मौनम् आश्रितवती। (लज्जते)

८. -------------------- सैनिकः शत्रु प्रहृतवान्। (युध्यते)

९. ------------------ चोरः आरक्षकैः गृहीतः। (पलायते)

१०. -------------------- फलं बालकः गृहीतवान्। (लम्बते)

११. -------------------- कण्टकं सः अपनीतवान्। (बाधते)

१२. कष्टानि -------------------- सा कष्टेन जीवति। (सहते)

१३. नूतनवस्त्रेण ---------- पुत्री गर्वेण गृहे सञ्चरति। (शोभते)

१४. ---------------- शाकविक्रयिका तत्र गता। (विक्रीणीते)

१५. ------------------ बालकाः क्रीडितुं गतवन्तः। (मोदन्ते)

१६. ----------------- वृक्षाः नितरां दुर्बलाः सन्ति। (कम्पन्ते)

१७. -------------------- भिक्षुकाः दैन्यं प्रदर्शयन्ति। (याचन्ते)

१८. ------------------------ भवन्तः हानिं प्राप्नुवन्ति। (त्वरन्ते)

१९. ------------------------- जनाः फलं प्राप्नुवन्ति। (प्रयतन्ते)

२०. -------------------------- वानराः कीच्कुर्वन्ति। (उत्प्लवन्ते)

२.१.३. विशेष्यानुगुणतया शानजन्तरूपं प्रयुज्य वाक्यानि लिखन्तु।

उदा –

| भक्तः वन्दते। तं देवः अनुगृह्णाति। |
|---|
| वन्दमानं भक्तं देवः अनुगृह्णाति। |

१. भिक्षुकः धनं प्रार्थयते। तं धनिकः निन्दितवान्।

---------------------------------------------------------------------- ।

२. आपणिकः विक्रीणीते। तेन वस्तुनः मूल्यम् उक्तम्।

---------------------------------------------------------------------- ।

३. देवदत्तः भुङ्क्ते । तस्मै एतत् फलं ददातु ।

---------------------------------------------------------------------------- ।

४. वृक्षः कम्पते । तस्मात् पर्णानि पतन्ति ।

---------------------------------------------------------------------------- ।

५. सः शेते । तस्य उत्थापनं मास्तु ।

---------------------------------------------------------------------------- ।

६. शत्रुसैनिकः म्रियते । तस्मिन् पुनः बाणप्रयोगः मास्तु ।

---------------------------------------------------------------------------- ।

७. माता आशङ्कते । सा पुत्रम् आहूय पृच्छति ।

---------------------------------------------------------------------------- ।

८. बालिका वाक्यं प्रयुङ्क्ते । सा अन्यां दृष्टवती ।

---------------------------------------------------------------------------- ।

९. पत्नी भुङ्क्ते । तां पतिः आहूतवान् ।

---------------------------------------------------------------------------- ।

१०. वटवः वेदम् अधीयते । तैः गुरुः नमस्कृतः ।

---------------------------------------------------------------------------- ।

११. विनीताः पण्डितान् सेवन्ते । तेषां समीपं भवान् गच्छतु ।

---------------------------------------------------------------------------- ।

१२. सैनिकाः युध्यन्ते । ते सैनिकान् मारयन्ति ।

---------------------------------------------------------------------------- ।

१३. छात्राः स्पर्धन्ते । तेषु उत्साहः महान् अस्ति ।

---------------------------------------------------------------------------- ।

१४. जनकः गृहे वर्तते । तस्मात् धनम् आनयतु ।

------------------------------------------------------------------------ ।

१५. सा जलम् आधत्ते । तया सह भवती गच्छतु ।

------------------------------------------------------------------------ ।

१६. रोगः वर्धते । तस्मात् शिशुः क्षीणः जातः ।

------------------------------------------------------------------------ ।

१७. मः शाकं विक्रीणीते । तस्य समीपं गत्वा मूल्यं पृच्छतु ।

------------------------------------------------------------------------ ।

१८. कुतृणानि वर्धन्ते । तेषाम् उत्पाटनं कारयतु ।

------------------------------------------------------------------------ ।

१९. सः श्रमात् जुगुप्सते । तं किमर्थं कार्यार्थं भवान् आह्वयति ?

------------------------------------------------------------------------ ?

२०. चर्चा प्रवर्तते । तस्यां भवतः प्रवेशः मास्तु ।

------------------------------------------------------------------------ ।

२१. मित्रं खिद्यते । तस्य साहाय्यम् अवश्यं करणीयम् ।

------------------------------------------------------------------------ ।

२२. कथा अनुवर्तते । तस्याः अग्रिमः भागः कुत्र ?

------------------------------------------------------------------------ ?

२३. रोगः प्रत्यावर्तते । तस्य चिकित्सा जागरूकतया करणीया ।

------------------------------------------------------------------------ ।

२४. सः आत्मानं बहुमन्यते । तस्मिन् भवतः स्नेहः किमर्थम् ?

------------------------------------------------------------------------ ।

२५. श्येनाः डयन्ते । तेभ्यः कुक्कुटशिशवः भीताः ।

------------------------------------------------------------------------ ।

## २. २. कर्मणि शानच्

'वर्धते', 'वन्दते', 'भुङ्क्ते' इत्यादयः आत्मनेपदिधांतवः कर्तरिप्रयोगे सन्ति । अतः वर्धमानः वन्दमानः भुञ्जानः इत्यादीनि शानजन्तरूपाणि कर्तरिप्रयोगीयाणि ।

वर्ध्यते, वन्द्यते, भुज्यते इत्यादीनि रूपाणि कर्मणिप्रयोगीयाणि इति वयं जानीमः । एतेषाम् अपि आत्मनेपदित्वम् एव इत्यतः एतेषाम् अपि शानच् प्रत्ययाः सम्भवन्ति । यथा - वर्ध्यमानः/ना/नम् वन्द्यमानः/ना/नम्, भुज्यमानः/ना/नम् इत्यादयः । एषः शानच् कर्मणिरूपसम्बन्धी इत्यतः 'कर्मणिशानच्' इति उच्यते ।

कर्मणिरूपेषु सर्वेषु 'ते'तः पूर्वं सर्वदा ह्रस्वः अकारः भवति एव । अतः कर्मणि सर्वेषु शानजन्तेषु मकरः (मुगागमः) भवति एव ।

२. २. १. अ. अधोनिर्दिष्टानां कर्मणि-रूपाणां क्रियापदानां शानजन्तरूपाणि लिखन्तु ।

उदा - गम्यते - (गम्यमानः)

| | |
|---|---|
| १. वन्द्यते - ( ) | २. प्राप्यते - ( ) |
| ३. खाद्यते - ( ) | ४. रक्ष्यते - ( ) |
| ५. श्रूयते - ( ) | ६. उह्यते - ( ) |
| ७. लिख्यते - ( ) | ८. उच्यते - ( ) |
| ९. क्रियते - ( ) | १०. प्रयुज्यते - ( ) |

**आ.** अधोनिर्दिष्टानाम् आत्मनेपदिक्रियापदानां कर्तरिशानज्रूपं, कर्मणिरूपं कर्मणिशानज्रूपं च लिखन्तु ।

| वर्तमानकाले प्र. पु. - ए. व. कर्तरि | कर्तरि शानच् (पुं.) | कर्मणिरूपम् (व. का. - प्र. पु. ए. व.) | कर्मणि शानच् (पुं) |
|---|---|---|---|
| उदा - वन्दते | वन्दमानः | वन्द्यते | वन्द्यमानः |
| १. वर्धते | ---------------- | ---------------- | ---------------- |
| २. कुरुते | ---------------- | ---------------- | ---------------- |
| ३. प्रार्थयते | ---------------- | ---------------- | ---------------- |
| ४. क्रीणीते | ---------------- | ---------------- | ---------------- |
| ५. प्रयुङ्क्ते | ---------------- | ---------------- | ---------------- |
| ६. परीक्षते | ---------------- | ---------------- | ---------------- |
| ७. सहते | ---------------- | ---------------- | ---------------- |
| ८. याचते | ---------------- | ---------------- | ---------------- |
| ९. प्रकाशते | ---------------- | ---------------- | ---------------- |
| १०. शङ्कते | ---------------- | ---------------- | ---------------- |
| ११. सेवते | ---------------- | ---------------- | ---------------- |
| १२. वर्धते | ---------------- | ---------------- | ---------------- |
| १३. चिनुते | ---------------- | ---------------- | ---------------- |
| १४. उपयुङ्क्ते | ---------------- | ---------------- | ---------------- |
| १५. वञ्चयते | ---------------- | ---------------- | ---------------- |

२.२.२. कर्मणि (भावे वा) प्रयोगे सर्वे धातवः आत्मनेपदिनः एव भवन्ति । अतः कर्मणि (भावे वा) शानच् एव भवति, न तु शतृ । अतः एवं वक्तुं शक्यते यत् **कर्तरि परस्मैपदिनां शतृ, आत्मनेपदिनां शानच् च भवति । कर्मणि (भावे वा) प्रयोगे सर्वेषां धातूनां शानच् एव ।**

अधस्तनधातूनां कर्तरि शत्रन्तं शानजन्तं वा रूपं, कर्मणिरूपं कर्मशानजन्तं रूपं च लिखन्तु ।

| वर्तमानकाले प्र. पु. ए. व. | शत्रन्तं/ शानजन्तं वा | कर्मणिरूपम् | कर्मणिशानजन्तम् |
|---|---|---|---|
| उदा - पठति | पठन् | पठ्यते | पठ्यमानः |
| १. लिखति | ------------- | ------------- | ------------- |
| २. शृणोति | ------------- | ------------- | ------------- |
| ३. अवलोकते | ------------- | ------------- | ------------- |
| ४. नयति | ------------- | ------------- | ------------- |
| ५. पिबति | ------------- | ------------- | ------------- |
| ६. स्मरति | ------------- | ------------- | ------------- |
| ७. ईक्षते | ------------- | ------------- | ------------- |
| ८. गायति | ------------- | ------------- | ------------- |
| ९. सूचयति | ------------- | ------------- | ------------- |
| १०. गृह्णाति | ------------- | ------------- | ------------- |

### २.२.३. कर्मणि शानच् कर्मणः विशेषणम्

वयं कर्तरिप्रयोगं कर्मणिप्रयोगं च जानीमः । कर्तरिप्रयोगे कर्तुः क्रियापदस्य, कर्मणिप्रयोगे कर्मणः क्रियापदस्य च सम्बन्धः भवति इत्यपि जानीमः । यथा -

i) रामः पुस्तकं पठति । - कर्तरिप्रयोगः । रामः - पठति इत्यनयोः सम्बन्धः ।

ii) रामेण पुस्तकं पठ्यते । - कर्मणिप्रयोगः । पुस्तकं - पठ्यते - इत्यनयोः सम्बन्धः ।

एवम् एव कर्तरि शतृशानजन्तयोः सम्बन्धः सदापि कर्तृपदेन एव भवति । कर्मणिशानजन्तस्य सम्बन्धः तु कर्मपदेन भवति । तन्नाम कर्तृ-शतृशानजन्तं कर्तृपदस्य विशेषणं भवति । कर्मणिशानजन्तं तु कर्मणः विशेषणं भवति ।

यथा - i) रामः विद्यालयं गच्छति ।




ii) रामेण विद्यालयः गम्यते ।




अधोनिर्दिष्टेषु वाक्येषु क्रियापदस्थाने शत्रन्तं शानजन्तं वा यथायोग्यं लिखित्वा कर्तुः कर्मणः वा विशेषणं च कृत्वा वाक्यानि पुनर्लिखन्तु ।

उदा - i) रामः फलां खादति । ii) रामेण फलं खाद्यते ।
फलं खादन् रामः । रामेण खाद्यमानं फलम् ।

१. i) माधवः क्षीरं पिबति । ii) माधवेन क्षीरं पीयते ।

---------------------------------- । ---------------------------------- ।

| | | |
|---|---|---|
| २. | i) शङ्करः कथां लिखति। | ii) शङ्करेण कथा लिख्यते। |
| | --------------------------------- । | --------------------------------- । |
| ३. | i) सेवकः कार्यं करोति। | ii) सेवकेन कार्यं क्रियते। |
| | --------------------------------- । | --------------------------------- । |
| ४. | i) आरक्षकः चोरं गृह्णाति। | ii) आरक्षकेण चोरः गृह्यते। |
| | --------------------------------- । | --------------------------------- । |
| ५. | i) अहं वार्तां शृणोमि। | ii) मया वार्ता श्रूयते। |
| | --------------------------------- । | --------------------------------- । |
| ६. | i) गीता श्लोकं स्मरति। | ii) गीतया श्लोकः स्मर्यते। |
| | --------------------------------- । | --------------------------------- । |
| ७. | i) सा ग्रन्थं ददाति। | ii) तया ग्रन्थः दीयते। |
| | --------------------------------- । | --------------------------------- । |
| ८. | i) एषः कथां वदति। | ii) एतेन कथा उच्यते। |
| | --------------------------------- । | --------------------------------- । |
| ९. | i) महिला शाटिकां क्रीणाति। | ii) महिलया शाटिका क्रीयते। |
| | --------------------------------- । | --------------------------------- । |
| १०. | i) कृषिकः ग्रामं गच्छति। | ii) कृषिकेण ग्रामः गम्यते। |
| | --------------------------------- । | --------------------------------- । |
| ११. | i) छात्रः पाठं पठति। | ii) छात्रेण पाठः पठ्यते। |
| | --------------------------------- । | --------------------------------- । |
| १२. | i) बालकः चित्रं पश्यति। | ii) बालकेन चित्रं दृश्यते। |
| | --------------------------------- । | --------------------------------- । |

२.२.४. अधः कानिचन वाक्ययुगलानि मन्ति । तेषु युगलेषु प्रथमवाक्यं कर्मणि अस्ति । प्रथमवाक्यस्य क्रियापदस्थाने शानजन्तं रूपं लिखित्वा तत् कर्मणः विशेषणत्वेन प्रयोक्तव्यम् । प्रथमवाक्ये यत् कर्म तदेव द्वितीयवाक्ये कतृ-कर्म-करणादिरूपेण दृश्यते । अतः प्रदर्शितोदाहरणानुसारं वाक्यद्वयं योजयित्वा एकं वाक्यं लिखन्तु ।

उदा – मया विद्यालयः गम्यते । विद्यालये ग्रन्थालयः नास्ति ।
मया गम्यमाने विद्यालये ग्रन्थालयः नास्ति ।

१. रामेण पाठः पठ्यते । पाठे श्लोकाः सन्ति ।

-------------------------------------------------------------------------- ।

२. आनन्देन कथा लिख्यते । कथायां हास्यरसः अस्ति ।

-------------------------------------------------------------------------- ।

३. गोविन्देन फलं खाद्यते । फले बीजानि सन्ति ।

-------------------------------------------------------------------------- ।

४. वैद्येन पेटिका नीयते । पेटिकायाम् औषधम् अस्ति ।

-------------------------------------------------------------------------- ।

५. गणेशेन वस्त्राणि क्रीयन्ते । वस्त्राणि सुन्दराणि सन्ति ।

-------------------------------------------------------------------------- ।

६. भवता वाक्यानि उच्यन्ते । वाक्यानि अहं शृणोमि ।

-------------------------------------------------------------------------- ।

७. अध्यापकेन पुस्तकानि दीयन्ते । पुस्तकानि भवान् गृहं नयतु ।

-------------------------------------------------------------------------- ।

८. आरक्षकेण चोरः गृह्यते । चोरः पलायनार्थं प्रयतते ।

-------------------------------------------------------------------------- ।

९. स्वामिना कर्मकरी निन्द्यते। कर्मकरी अस्वस्था अस्ति।

------------------------------------------------------------------------ ।

१०. मया कार्यं क्रियते। कार्यस्य विघ्नं मा करोतु।

------------------------------------------------------------------------ ।

११. मया वार्ता श्रूयते। वार्तायां विशेषः कोऽपि नास्ति।

------------------------------------------------------------------------ ।

१२. रमया श्लोकः स्मर्यते। श्लोकम् अहम् अपि जानामि।

------------------------------------------------------------------------ ।

१३. कृष्णेन गीतं गीयते। गीतं भवती जानाति वा ?

------------------------------------------------------------------------ ।

१४. शिशुना क्षीरं पीयते। क्षीरं मधुरम् अस्ति।

------------------------------------------------------------------------ ।

१५. बालिकया उद्यानं दृश्यते। उद्याने सुन्दराणि पुष्पाणि सन्ति।

------------------------------------------------------------------------ ।

२.२.५. अधः सूचितानि वाक्यानि उदाहरणानुगुणं वाक्ययुगलत्वेन विभज्य लिखन्तु।

उदा –

| जनन्या प्रेष्यमाणा पुत्री खिन्ना अस्ति। |
|---|
| i) जनन्या पुत्री प्रेष्यते। |
| ii) सा खिन्ना अस्ति। |

१. दूरदर्शनेन प्रदर्श्यमानं चित्रम् अहं पश्यामि।

i) ------------------------------------------------------------ ।

ii) ------------------------------------------------------------ ।

२. अर्चकेण उच्यमानं मन्त्रं भक्ताः शृण्वन्ति ।

i) ------------------------------------------------------------ ।

ii) ------------------------------------------------------------ ।

३. भवत्या पाठ्यमानः पाठः मया सम्यक् ज्ञातः ।

i) ------------------------------------------------------------ ।

ii) ------------------------------------------------------------ ।

४. शिशुना खाद्यमानं खाद्यम् एषः बलात् स्वीकृतवान् ।

i) ------------------------------------------------------------ ।

ii) ------------------------------------------------------------ ।

५. माधवेन पीयमाने जले अवकराः सन्ति ।

i) ------------------------------------------------------------ ।

ii) ------------------------------------------------------------ ।

६. केशवेन सूच्यमाने मार्गे गर्ताः सन्ति ।

i) ------------------------------------------------------------ ।

ii) ------------------------------------------------------------ ।

७. भवता क्रियमाणात् कार्यात् कस्यापि अपायः नास्ति खलु ?

i) ------------------------------------------------------------ ।

ii) ------------------------------------------------------------ ?

८. भवता पठ्यमानस्य पुस्तकस्य विषयः कथम् अस्ति ?

i) ------------------------------------------------------------ ।

ii) ------------------------------------------------------------ ?

९. पितामहेन कथ्यमाना कथा नीरसा अस्ति भोः।

i) ------------------------------------------------------------ ।

ii) ------------------------------------------------------------ ।

१०. जनन्या प्रेष्यमाणा पुत्री खिन्ना अस्ति।

i) ------------------------------------------------------------ ।

ii) ------------------------------------------------------------ ।

२.२.६. अधोनिर्दिष्टेषु वाक्येषु शानच् कर्तरि वा कर्मणि वा इति आवरणे लिखन्तु।

उदा - i) शिष्यः गुरुं वन्दमानः अस्ति। (कर्तरि शानच्)
ii) भक्तेन प्रार्थ्यमानः हरिः वरं ददाति। (कर्मणि शानच्)

१. तेन उच्यमानः श्लोकः मया श्रूयते। (---------------------------)

२. कष्टं सहमानः कृषिकः जीवति। (------------------------------)

३. नर्तक्या क्रियमाणं नृत्यं सहृदयाः पश्यन्ति। (-------------------)

४. पण्डिताः अधीयानाः चिन्तनं कुर्वन्ति। (-------------------------)

५. रुग्णः शयानः फलं खादति। (------------------------------------)

६. सेवकेन कार्यं क्रियमाणम् अस्ति। (------------------------------)

७. आरक्षकैः रक्ष्यमाणं गृहं लुण्ठाकाः चोरितवन्तः। (---------------)

८. कर्मकर्या उह्यमानं भारं भवती अवतारयतु। (--------------------)

९. हरिं सेवमानः भक्तः सुखम् अनुभवति। (-------------------------)

१०. पितामह्या उच्यमानां कथां बालकाः शृण्वन्ति। (-------------------)

११. दुष्टैः निन्द्यमानाः सज्जनाः खेदं प्राप्नुवन्ति। (------------------------)

१२. भक्तैः श्रूयमाणा हरिकथा पापं नाशयति। (------------------------)

१३. कार्यं कुर्वाणानां वेतनम् अद्य दातव्यम्। (--------------------------)

१४. शैत्येन कम्पमानेभ्यः युवकेभ्यः उष्णपानीयं ददातु। (--------------)

१५. उदयमानस्य सूर्यस्य किरणाः रक्ताः। (------------------------------)

१६. क्रियमाणे कार्ये सदा श्रद्धा भवतु । (---------------------------------)

१७. अध्यापकेन पाठ्यमानः पाठः कठिनः। (----------------------------)

१८. वर्धमानं सस्यं मा कर्तयतु भवान्। (---------------------------------)

१९. भक्तेन प्रार्थ्यमानेन देवेन वरः दत्तः। (------------------------------)

२०. भवता ध्रियमाणं वस्त्रम् उत्तमम् अस्ति। (-------------------------)

२१. प्रार्थयमानं याचकं धनिकः न दृष्टवान्। (--------------------------)

२२. व्याधः डयमानं पक्षिणं मारितवान्। (------------------------------)

२३. भवता किं पीयमानम् अस्ति ? (-----------------------------------)

२४. आकाशे प्रकाशमानं नक्षत्रं पश्यतु तावत्। (----------------------)

२५. कृपणं सेवमानः सेवकः कष्टम् अनुभवति। (----------------------)

२६. तेन सुदीर्घा कथा लिख्यमाना अस्ति। (---------------------------)

२७. भक्तैः हरिः सेव्यमानः अस्ति। (----------------------------------)

२८. भवता पठ्यमानस्य पुस्तकस्य विषयः कः ? (------------------)

# परिशिष्टम् - १

## व्यावहारिकदृष्ट्या शत्रन्त-शानजन्तयोः निरूपणम्




*-१ वर्तमानकालस्य प्रथमपुरुषबहुवचनरूपं दृष्ट्वा एतत् रूपम् ऊहनीयम् ।

*-२ 'ति' प्रत्ययतः पूर्वं ह्रस्वः अकारः अस्ति चेत् नुम् करणीयम् । इतरत्र न । तदा दोषः कुत्रापि न भवति ।

*-३ 'ते' प्रत्ययात् पूर्वं ह्रस्वः अकारः अस्ति चेत् मुक् करणीयम् । इतरत्र न । तदा तु दोषः कुत्रापि न भवति ।

**सूचना -** विना दोषं, विना क्लेशं च व्यवहारः यथा शक्येत तथा अत्र निरूपणं कृतम् । समग्रं निरूपणं तु द्वितीये तृतीये च परिशिष्टे कृतम् अस्ति ।

# परिशिष्टम् - २

**शतृप्रत्यये स्त्रियां नुम् (न) व्यवस्था - (समग्रा - सूत्रसहिता च)**

[(परस्मैपदिभ्यः शतृ (अत्)]

| **नित्यम् (I)** | **विकल्पेन (II)** | **न भवति (III)** |
|---|---|---|
| * प्रथम (१) गणीयानाम् (पठन्ती) | * षष्ठ (६) गणीयानाम् (तुदती - तुदन्ती) | * द्वितीय (२) गणीयानाम् (चतुर्दश धातून् विहाय) (द्विषती) |
| * चतुर्थ (४) गणीयानाम् (नृत्यन्ती) | * द्वितीये (२) गणे चतुर्दश-धातूनां केवलम्* (स्नाती - स्नान्ती) | * तृतीय (३) गणीयानाम् (ददती) |
| * दशम (१०) गणीयानाम् (चोरयन्ती) | * भविष्यति (V) सर्वगणीयानाम् अपि (करिष्यन्ती-करिष्यती) | * पञ्चम (५) गणीयानाम् (चिन्वती) |
| * प्रेरणे णिचि (IV) सर्वगणीयानाम् अपि (१-१०) (पाठयन्ती) | | * सप्तम (७) गणीयानाम् (रुधती) |
| | | * अष्टम् (८) गणीयानाम् (कुर्वती) |
| | | * नवम (९) गणीयानाम् (क्रीणती) |

## नुम्सम्बन्धिविषयाः

I. **श्यपृश्यनोर्नित्यम् । - (७-१-८०)**

श्यपृश्यनोरात्परः यः शतुरवयवस्तदन्तस्य नित्यं नुम् स्यात् शीनद्योः परतः ।

II. **आच्छीनद्योर्नुम् - (७-१-८१)**

अवर्णान्तात् अङ्गात् परो यः शतुरवयवस्तदन्तस्याङ्गस्य नुम् वा स्यात् शीनद्योः परतः । (येषां परस्मैपदिनां धातूनां लटि प्रथमपुरुषैकवचने 'ति' प्रत्ययात्पूर्वं ह्रस्वस्य अकारस्य श्रवणं भवति तेषां धातूनां शत्रन्ते स्त्रियां नुम् भवति । अन्यत्र न भवति इति तात्पर्यार्थत्वेन स्वीकर्तुं शक्यम् । यथा - पठति - पठन्ती, करोति - कुर्वती ।

III. अवर्णान्ताङ्गस्य अभावात् 2,3,5,7,8,9 गणेषु प्रविष्टानां नुम् न भवति ।

IV. प्रेरणार्थे णिचि कृते तदन्तानां शतृप्रत्ययान्ते सर्वगणप्रविष्टानाम् अपि स्त्रियां नित्यं नुम् भवति । णिचि कृते सर्वत्र शप्प्रत्ययस्य सम्भवात् ।

V. भविष्यत्काले शत्रन्तेऽपि सर्वगणप्रविष्टानाम् अपि विकल्पेन नुम् भवति, सर्वत्र अकाराङ्गत्वात् ।

* चतुर्दशसु - याति, भाति, स्नाति, वाति, द्राति, पाति, ख्याति, माति - एते प्रसिद्धाः ।

# परिशिष्टम् - ३

**शानच्प्रत्यये परे मुक् (म्) व्यवस्था (समग्रा सूत्रसहिता च)**

[आत्मनेपदिभ्यः शानच् (आन)]

| **भवति (I)** | **न भवति (II)** |
|---|---|
| * प्रथम (१) गणीयानाम् (वन्दमानः) | * द्वितीय (२) गणीयानाम् (द्विषाणः) |
| * चतुर्थ (४) गणीयानाम् (मन्यमानः) | * तृतीय (३) गणीयानाम् (ददानः) |
| * षष्ठ (६) गणीयानाम् (लज्जमानः) | * पञ्चम (५) गणीयानाम् (चिन्वानः) |
| * दशम (१०) गणीयानाम् (मन्त्रयमाणः) | * सप्तम (७) गणीयानाम् (भिन्दानः) |
| * कर्मयगन्तानाम्* (१-१०) (दीयमानः) | * अष्टम (८) गणीयानाम् (कुर्वाणः) |
| * भविष्यति* (१-१०) (करिष्यमाणः) | * नवम (९) गणीयानाम् (पुनानः) |

## मुक्सम्बन्धिविषयाः

I. **आने मुक् - (७-१-८२)**
अदन्ताङ्गस्य मुगागमः स्यात् आने परे।
(अदन्ताङ्गत्वं 1,4,6,10 गणपठितानाम् एव सम्भवति। * कर्म शानाचि कृते, * भविष्यति शानचि कृतेऽपि सर्वगणपठितानाम् अदन्ताङ्गत्वं सम्भवति। अतः नित्यं मुक्।)

II. 2,3,5,7,8,9 गणपठितानां कदापि अदन्ताङ्गत्वं न सम्भवतीति मुक् न भवति।

# उत्तराणि

**१.१.१.**

१. तन्वन्ति, तन्वन्। २. शृण्वन्ति, शृण्वन्। ३. हरन्ति, हरन्।
४. ताडयन्ति, ताडयन्। ५. नृत्यन्ति, नृत्यन्। ६. कुप्यन्ति, कुप्यन्।
७. जानन्ति, जानन्। ८. क्रीणन्ति, क्रीणन्। ९. रुदन्ति, रुदन्।
१०. गृह्णन्ति, गृह्णन्। ११. शक्नुवन्ति, शक्नुवन्। १२. विश्वसन्ति, विश्वसन्।
१३. विवृण्वन्ति, विवृण्वन्।
१४. भिन्दन्ति, भिन्दन्। १५. जिघ्रन्ति, जिघ्रन्। १६. ददति, ददत्।
१७. प्राप्नुवन्ति, प्राप्नुवन्।
१८. अभ्यस्यन्ति, अभ्यस्यन्।
१९. चिन्वन्ति, चिन्वन्। २०. बध्नन्ति, बध्नन्। २१. दण्डयन्ति, दण्डयन्।
२२. वर्णयन्ति, वर्णयन्।
२३. प्रतिगृह्णन्ति, प्रतिगृह्णन्।
२४. स्वीकुर्वन्ति, स्वीकुर्वन्।
२५. नश्यन्ति, नश्यन्। २६. पश्यन्ति, पश्यन्। २७. प्रविशन्ति, प्रविशन्।
२८. आरोहन्ति, आरोहन्।
२९. चर्चयन्ति, चर्चयन्। ३०. पीडयन्ति, पीडयन्।

**१.१.२.**

१. बालकः शृण्वन्। २. बालकः लिखन्।
३. कलाकारः वादयन्। ४. रामः जिघ्रन्।
५. भक्तः नमस्कुर्वन्। ६. तरुणः पश्यन्।
७. शिशुः हसन्। ८. कपिः आरोहन्।
९. शिशुः रुदन्। १०. गुरुः उपदिशन्।
११. नर्तकः नृत्यन्। १२. वृद्धः गच्छन्।

**१.१.३.**

१. आनयन्। २. आरोहन्। ३. क्षालयन्।
४. विवृण्वन्। ५. शृण्वन्।
६. स्वीकुर्वन्। ७. पश्यन्तः।
८. शृण्वन्तः। ९. अभिनयन्तः।
१०. वहन्तः।

**विशेषः**

१. ददत्। २. ददत्। ३. ददत्।
४. ददतः। ५. यच्छन्। ६. यच्छन्तः।

**१.१.४.**

१. पश्यन्। २. गच्छन्। ३. पिबन्।
४. चालयन्। ५. ददत् (यच्छन्)।
६. कुर्वन्। ७. खादन्तः। ८. अनुसरन्तः।
९. शृण्वन्तः। १०. वदन्तः।

**१.१.५.**

२. पठन्तं तरुणम्। ३. लिखन्तं छात्रम्।
४. रुदन्तं बालकम्। ५. जपन्तं जनकम्।
६. खादन्तम् अनुजम्। ७. पतन्तं शिशुम्।
८. उत्तिष्ठन्तं वृद्धम्। ९. पिबन्तं सुरेशम्।
१०. चोरयन्तं चोरम्। ११. पाठयन्तम् आचार्यम्। १२. धावन्तं स्नेहितम्।

**१.१.६.**

१. धावतः मृगान्। २. तिष्ठतः कर्मकरान्। ३. नृत्यतः मयूरान्।
४. अपहरतः चोरान्। ५. क्रीडतः बालकान्। ६. गच्छतः जनान्।
७. पठतः छात्रान्। ८. चालयतः जनान्। ९. कुर्वतः पुत्रान्।

**१.१.७.**

१. आचरता मुनिवरेण मौनं स्थितम् ।
२. वदता तेन दोषः कृतः ।
३. पठता छात्रेण श्लोकाः कण्ठस्थीकृताः ।
४. शृण्वता भवता निद्रा कृता ।
५. गच्छता जनेन सर्वं साध्यते ।
६. क्रीडद्भिः बालकैः कोलाहलः कृतः ।
७. जानद्भिः अपि जनैः नियमाः न पालिताः ।
८. नमस्कुर्वद्भिः भक्तैः देवः स्मृतः ।
९. कुर्वद्भिः कर्मकरैः श्रान्तिः अनुभूता ।
१०. तिष्ठद्भिः भटैः प्रवेशः निवारितः ।

**१.१.८.**

२. नृत्यते नर्तकाय । ३. अभिनयते नटाय । ४. परिश्राम्यते कर्मकराय ।
५. प्राप्नुवते पुत्राय । ६. गायते गायकाय ।
७. पठते वेदच्छात्राय । ८. प्रदर्शयते ऐन्द्रजालिकाय । ९. कुर्वते तरुणाय ।
१०. पचते पाचकाय ।

**१.१.९.**

२. सर्पतः सर्पात् । ३. गर्जतः सिंहात् ।
४. भषतः शुनकात् । ५. ज्वलतः अग्नेः ।
६. ताडयतः अध्यापकात् ।
७. लुण्ठयद्भ्यः लुण्ठाकेभ्यः ।
८. निन्दद्भ्यः दुष्टेभ्यः । ९. चोरयद्भ्यः चोरेभ्यः । १०. रक्षद्भ्यः आरक्षकेभ्यः ।

**१.१.१०.**

१. क्रीडतः शिशोः । २. पततः श्रीधरस्य।
३. धावतः बालकस्य । ४. पूजयतः अर्चकस्य । ५. ध्यायतः मुनिवरस्य ।
६. विहरतः वृद्धस्य । ७. यच्छतां धनिकानाम् । ८. खनतां कर्मकराणाम् ।
९. पठतां छात्राणाम् । १०. कुर्वतां जनानाम् ।

**१.१.११.**

१. अभिनयत्सु नटेषु । २. पठत्सु छात्रेषु ।
३. क्रीडत्सु बालकेषु । ४. गायत्सु गायकेषु । ५. कुर्वत्सु उद्योगिषु ।
६. गच्छत्सु जनेषु । ७. विहरत्सु पक्षिषु ।
८. तरत्सु तरुणेषु । ९. अलङ्कुर्वत्सु जनेषु । १०. लिखत्सु एतेषु ।

**१.१.१२.**

१. खादते । २. लिखता । ३. गच्छन्तम् ।
४. क्रीडद्भिः । ५. कुर्वद्भ्यः ।
६. उपविशन्तम् । ७. पततः ।
८. गच्छत्सु । ९. पिबताम् । १०. कुर्वते ।
११. लिखद्भिः । १२. पतद्भ्यः ।
१३. आगच्छद्भ्यः । १४. आचरता ।
१५. लिखताम् ।

**१.२.१. अ.**

१. +इ, +अ, +इ ।
२. +अ, +ओ, +इ ।
३. प् + अ + श्य् + अ + त् + इ ।
४. क् + ई + ड् + अ + त् + इ ।
५. श् + ऋ + ण् + ओ + त् + इ ।
६. भ् + अ + क्ष् + अ + य् + अ + त् + इ ।
७. ग् + आ + य् + अ + त् + इ ।
८. ज् + आ + न् + आ + त् + इ ।
९. द् + अ + द् + आ + त् + इ ।
१०. श् + अ + क्न् + ओ + त् + इ ।

**आ.**

१. +अ, अकारः । २. जान् + आ, आकारः । ३. कर् + ओ, ओकारः ।
४. गृह्ण् + आ, आकारः । ५. स्न् + आ, आकारः । ६. आप् + ओ, ओकारः ।
७. कुप्य् + अ, अकारः । ८. रचय् + अ,

अकारः। ९. रोद्+इ, इकारः।
१०. चिन्+ओ, ओकारः।

१.२.२. अ.

१. ओकारः, शृण्वन्, शृण्वती।
२. अकारः, प्रेषयन्, प्रेषयन्ती।
३. अकारः, उत्तिष्ठन्, उत्तिष्ठन्ती।
४. अकारः, स्मरन्, स्मरन्ती।
५. ओकारः, शक्नुवन्, शक्नुवती।
६. अकारः, निन्दन्, निन्दन्ती।
७. आकारः, क्रीणन्, क्रीणती।
८. अकारः, आह्वयन्, आह्वयन्ती।
९. अकारः, पृच्छन्, पृच्छन्ती।
१०. ओकारः, स्वीकृर्वन्, स्वीकुर्वती।

आ.

१. पश्यन्ती। २. क्रीडन्ती।
३. नमस्कृर्वती। ४. जानती।
५. भक्षयन्ती। ६. सङ्गृह्णती।
७. स्नाती। ८. याती। ९. अलङ्कुर्वती
१०. छिन्दती। ११. गणयन्ती।
१२. ददती। १३. बिभ्यती।
१४. सञ्चिन्वती। १५. प्राप्नुवती।
१६. बध्नती। १७. रुदती।
१८. कुप्यन्ती। १९. रचयन्ती।
२०. आरोहन्ती।

इ.

१. शृणोति - ओकारः। अशुद्धम्।
२. जानाति - आकारः। अशुद्धम्।
३. क्रीणाति - आकारः। अशुद्धम्।
४. गणयति - ह्रस्वः अकारः। शुद्धम्।
५. प्राप्नोति - ओकारः। अशुद्धम्।
६. तिष्ठति - ह्रस्वः अकारः। शुद्धम्।
७. शक्नोति - ओकारः। अशुद्धम्।
८. परिशीलयति - ह्रस्वः अकारः। शुद्धम्।
९. व्यवहरति - ह्रस्वः अकारः। शुद्धम्।
१०. अनुगृह्णाति - आकारः। अशुद्धम्।
११. अन्विष्यति - ह्रस्वः अकारः। शुद्धम्।
१२. स्मरति - ह्रस्वः अकारः। अशुद्धम्।
१३. प्रविशति - ह्रस्वः अकारः। शुद्धम्।
१४. अवरोहति - ह्रस्वः अकारः। शुद्धम्।
१५. बध्नाति - आकारः। अशुद्धम्।

१.२.३.

१. तरुणी हसन्ती। २. नर्तकी नृत्यन्ती।
३. महिला पश्यन्ती। ४. छात्रा शृण्वती।
५. गायिका गायन्ती। ६. बालिका चालयन्ती। ७. वृद्धा पठन्ती।
८. गृहिणी सीव्यन्ती। ९. युवतिः खादन्ती। १०. उषा धावन्ती।
११. अधिकारिणी चिन्तयन्ती।
१२. सुन्दरी धरन्ती।

१.२.४.

१. गायन्ती। २. स्नाती। ३. लिखन्ती।
४. रुदती। ५. प्रक्षालयन्ती।
६. अन्विष्यन्ती। ७. पश्यन्ती।
८. स्मरन्त्यः। ९. जानत्यः।
१०. पृच्छन्त्यः। ११. दुहत्यः।
१२. पश्यन्त्यः।

१.२.५.

१. पठन्तीम्। २. धावन्तीम्।
३. आनयन्तीम्। ४. गच्छन्तीम्।
५. स्मरन्तीम्। ६. चोरयन्तीम्।
७. कुर्वतीम्। ८. खादन्तीम्।
९. क्रीडन्तीम्। १०. प्रक्षालयन्तीम्।
११. खादन्तीः। १२. चरन्तीः।
१३. कुर्वतीः। १४. जानतीः।
१५. शृण्वतीः।

१.२.६.

१. स्मरन्त्या तया। २. लिखन्त्या छात्रया। ३. खादन्त्या बालिकया।

४. वदन्त्या तया । ५. कुर्वतीभिः ताभिः। ६. शृण्वत्या अनुजया । ७. कुर्वतीभिः गृहिणीभिः । ८. चरन्तीभिः धेनुभिः । ९. खादन्तीभिः महिलाभिः । १०. कुर्वतीभिः ताभिः । ११. शृण्वत्या तया । १२. क्रीडन्तीभिः विद्यार्थिनीभिः । १३. पश्यन्तीभिः महिलाभिः ।

**१. २. ७.**

२. पठन्त्यै पितामह्यै फलानि ।
३. कुर्वत्यै भ्रातृजायायै पात्रम् ।
४. प्रसादयन्त्यै अग्रजायै केशसूचीः ।
५. शृण्वत्यै मातुलान्यै पानीयम् ।
६. मार्जयन्त्यै कर्मकर्यै मार्जनवस्त्रम् ।
७. पश्यन्त्यै सख्यै क्षीरम् ।
८. गच्छन्त्यै प्रतिवेशिन्यै कुङ्कुमम् ।
९. नमस्कुर्वत्यै पितृव्यायै पुष्पाणि ।
१०. क्रीडन्त्यै अनुजायै कन्दुकम् ।
११. गायन्त्यै तस्यै किमपि कार्यम् ।

**१. २. ७.**

१. आगच्छन्त्याः । २. प्रवहन्त्याः ।
३. विकसन्त्याः । ४. तुष्यन्त्याः ।
५. गर्जन्त्याः । ६. उपविशन्त्याः ।
७. जनयन्तीभ्यः । ८. आगच्छन्तीभ्यः ।
९. पठन्तीभ्यः । १०. तर्जयन्तीभ्यः ।

**१. २. ९.**

१. गच्छन्त्याः महिलायाः । २. हसन्त्याः तस्याः । ३. निवसन्त्याः तस्याः । ४. कुर्वत्याः भगिन्याः । ५. जल्पन्त्याः गृहिण्याः । ६. क्रीणत्याः एतस्याः । ७. नृत्यन्तीनां नर्तकीनाम् । ८. शृण्वतीनां महिलानाम् । ९. कुर्वतीनां महिलानाम् । १०. क्रीडन्तीनां बालिकानाम् ।

**१. २. १०.**

१. प्रवहन्त्यां नद्याम् । २. आगच्छन्त्याम् एतस्याम् । ३. नृत्यन्त्यां नर्तक्याम् । ४. कुर्वत्यां पुत्र्याम् । ५. पूजयन्त्यां भक्तायाम् । ६. कथयन्त्यां तस्याम् । ७. पठन्तीषु एतासु । ८. कुर्वतीषु तासु । ९. पठन्तीषु अस्मासु । १०. कुर्वतीषु तासु ।

**१. २. ११.**

१. शृण्वतीम् । २. पठन्त्या ।
३. पतन्त्या । ४. उपविशन्त्यै ।
५. गच्छन्त्यै । ६. पश्यन्त्याः ।
७. प्रेषयन्तीः । ८. खादन्तीभिः ।
९. कुर्वतीभ्यः । १०. पठन्त्यै ।
११. असूयन्त्यै । १२. जानत्या ।
१३. कुर्वतीषु । १४. पूजयन्तीनाम् ।
१५. क्रीडन्तीः ।

**१. ३. १.**

१. कुर्वन्ति - कुर्वत् ।
२. शृण्वन्ति - शृण्वत् ।
३. नश्यन्ति - नश्यत् ।
४. भ्रमन्ति - भ्रमत् ।
५. अवतरन्ति - अवतरत् ।
६. पतन्ति - पतत् ।
७. गच्छन्ति - गच्छत् ।
८. विकसन्ति - विकसत् ।
९. स्फुरन्ति - स्फुरत् ।
१०. आचरन्ति - आचरत् ।
११. उद्गच्छन्ति - उद्गच्छत् ।
१२. प्रचलन्ति - प्रचलत् ।
१३. प्रसारयन्ति - प्रसारयत् ।
१४. जनयन्ति - जनयत् ।

**१. ३. २. अ.**

१. प्रचलत् । २. निर्गच्छत् । ३. कुर्वत् । ४. स्फुरत् । ५. नश्यत् । ६. प्रचलत् ।

**आ.**

१. विकसन्ति सन्ति । २. कुर्वन्ति सन्ति । ३. पतन्ति सन्ति । ४. शुष्कीभवन्ति सन्ति । ५. गच्छन्ति सन्ति ।

१.३.३.

१. गच्छत्। २. कुर्वत्। ३. स्फुरत्।
४. आगच्छत्। ५. प्रसारयत्। ६. कुर्वत्।
७. पतत्। ८. निस्सारयन्ति। ९. भ्रमन्ति।
१०. नश्यन्ति।

१.३.४.

१. पतताम्। २. विकसतः।
३. गच्छति। ४. शृण्वता। ५. खादते।
६. आगच्छतः। ७. तिष्ठद्भ्यः।
८. प्रवहति। ९. विकसद्भ्यः।
१०. कुर्वतः। ११. अवतरतः।
१२. उद्गच्छति। १३. कुर्वता।
१४. प्रदर्शयतः। १५. भ्रमतः।
१६. चलत्। १७. स्फुरताम्।
१८. विकसतः। १९. गच्छतः।
२०. स्रवतः, न्यूनीभवतः।

१.४.१.

१. जल्पन्तं, हसन्तम्। २. क्रीडतः, कुर्वतः। ३. चिन्तयता, वदता। ४. हसन्तीभिः, गच्छन्तीभिः। ५. रुदते, आगच्छते। ६. गायन्त्यै, नृत्यन्त्यै। ७. धावतः, आगच्छतः। ८. क्षिपतः, गृह्णतः, गच्छतः। ९. तर्जयन्त्याः, ताडयन्त्याः। १०. पश्यतः, चिन्तयतः, गच्छतः। ११. जानतीषु, पठन्तीषु। १२. हसत्सु, जल्पत्सु, कुर्वत्सु।

१.४.२.

१. कुर्वन्, गच्छतः। २. पश्यन्त्या, उद्गच्छत्। ३. शृण्वन्तं, कुर्वती। ४. रुदते, हसन्ती। ५. गच्छन्, धावन्तं। ६. खादते, हसन्त्या। ७. आगच्छतः, आगच्छतः। ८. तपतः, चलतः। ९. क्रीडद्भिः, प्रवहन्त्याम्। १०. हसतः, पतन्तीम्।
११. याचते, पठन्, कुर्वतीम्।
१२. क्रीडद्भ्यः, यच्छन्त्याः।
१३. कर्तयन्त्या, उद्गच्छत्।
१४. पाठयन्, कुर्वन्तम्। १५. पश्यन्तः, नृत्यन्तम्। १६. क्रीडन्तः, पठतः।
१७. चरन्ती, दशन्तीम्।
१८. पठन्तम्, लिखन्तीम्, स्नान्तम्।

२.१.१.

१. कम्पन्ते - ह्रस्वः अकारः - कम्पमानः/ना/नम्।
२. अधीयते - ईकारः - अधीयानः/ना/नम्।
३. युध्यन्ते - ह्रस्वः अकारः - युध्यमानः/ना/नम्।
४. वर्धन्ते - ह्रस्वः अकारः - वर्धमानः/ ना/नम्।
५. चिन्वते - उकारः - चिन्वानः/ ना/नम्।
६. आद्रियन्ते - ह्रस्वः अकारः - आद्रियमाणः/ ना/नम्।
७. म्रियन्ते - ह्रस्वः अकारः - म्रियमाणः/ ना/नम्।
८. भुञ्जते - ककारः - भुञ्जानः/ ना/नम्।
९. प्रयुञ्जते - ककारः - प्रयुञ्जानः/ना/नम्।
१०. कुर्वते - उकारः - कुर्वाणः/ ना/नम्।
११. तन्वते - उकारः - तन्वानः/ ना/नम्।
१२. क्रीणते - ईकारः - क्रीणानः/ना/नम्।
१३. गृह्णते - ईकारः - गृह्णानः/ ना/नम्।
१४. जानते - ईकारः - जानानः/ ना/नम्।
१५. प्रार्थयते - ह्रस्वः अकारः - प्रार्थयमानः/ ना/नम्।

२.१.२.

१. वन्दमानः। २. क्रीणाना। ३. भुञ्जानः।
४. प्रकाशमानम्। ५. परीक्षमाणः।
६. शयाना। ७. लज्जमाना।

८. युध्यमानः । ९. पलायमानः ।
१०. लम्बमानम् । ११. बाधमानम् ।
१२. सहमाना । १३. शोभमाना ।
१४. विक्रीणाना । १५. मोदमानाः ।
१६. कम्पमानाः । १७. याचमानाः ।
१८. त्वरमाणाः । १९. प्रयतमानाः ।
२०. उत्प्लवमानाः ।

**२.१.३.**

१. प्रार्थयमानं भिक्षुकम् । २. विक्रीणानेन आपणिकेन । ३. भुञ्जानाय देवदत्ताय ।
४. कम्पमानात् वृक्षात् । ५. शयानस्य तस्य । ६. म्रियमाणे शत्रुसैनिके ।
७. आशङ्कमाना माता । ८. प्रयुञ्जाना बालिका । ९. भुञ्जानां पत्नीम् ।
१०. अधीयानैः वटुभिः ।
११. सेवमानानां विनीतानाम् ।
१२. युध्यमानाः सैनिकाः ।
१३. स्पर्धमानेषु छात्रेषु । १४. वर्तमानात् जनकात् । १५. आदधानया तया ।
१६. वर्धमानात् रोगात् । १७. विक्रीणानस्य तस्य । १८. वर्धमानानां कुतृणानाम् ।
१९. जुगुप्समानं तम् । २०. प्रवर्तमानायां चर्चायाम् । २१. खिद्यमानस्य मित्रस्य ।
२२. अनुवर्तमानायाः कथायाः ।
२३. प्रत्यावर्तमानस्य रोगस्य ।
२४. बहुमन्यमाने तस्मिन् ।
२५. डयमानेभ्यः श्येनेभ्यः ।

**२.२.१. अ.**

१. वन्द्यमानः । २. प्राप्यमाणः ।
३. खाद्यमानः । ४. रक्ष्यमाणः ।
५. श्रूयमाणः । ६. उह्यमानः ।
७. लिख्यमानः । ८. उच्यमानः ।
९. क्रियमाणः । १०. प्रयुज्यमाणः ।

**आ.**

१. वर्धमानः, वर्ध्यते, वर्ध्यमानः ।
२. कुर्वाणः, क्रियते, क्रियमाणः ।
३. प्रार्थयमानः, प्रार्थ्यते, प्रार्थ्यमानः ।
४. क्रीणानः, क्रीयते, क्रीयमाणः ।
५. प्रयुञ्जानः, प्रयुज्यते, प्रयुज्यमानः ।
६. परीक्षमाणः, परीक्ष्यते, परीक्ष्यमाणः ।
७. सहमानः, सह्यते, सह्यमानः ।
८. याचमानः, याच्यते, याच्यमानः ।
९. प्रकाशमानः, प्रकाश्यते, प्रकाश्यमानः ।
१०. शङ्कमानः, शङ्क्यते, शङ्क्यमानः ।
११. सेवमानः, सेव्यते, सेव्यमानः ।
१२. वर्धमानः, वर्ध्यते, वर्ध्यमानः ।
१३. चिन्वानः, चीयते, चीयमानः ।
१४. उपयुञ्जानः, उपयुज्यते, उपयुज्यमानः ।
१५. वञ्चयमानः, वञ्च्यते, वञ्च्यमानः ।

**२.२.२.**

१. लिखन्, लिख्यते, लिख्यमानः ।
२. शृण्वन्, श्रूयते, श्रूयमाणः ।
३. अवलोकमानः, अवलोक्यते, अवलोक्यमानः ।
४. नयन्, नीयते, नीयमानः ।
५. पिबन्, पीयते, पीयमानः ।
६. स्मरन्, स्मर्यते, स्मर्यमाणः ।
७. ईक्षमाणः, ईक्ष्यते, ईक्ष्यमाणः ।
८. गायन्, गीयते, गीयमानः ।
९. सूचयन्, सूच्यते, सूच्यमानः ।
१०. गृह्णन्, गृह्यते, गृह्यमाणः ।

**२.२.३.**

१. i) क्षीरं पिबन् माधवः ।
   ii) माधवेन पीयमानं क्षीरम् ।
२. i) कथां लिखन् शङ्करः ।
   ii) शङ्करेण लिख्यमाना कथा ।

३. i) कार्यं कुर्वन् सेवकः ।
ii) सेवकेन क्रियमाणं कार्यम् ।
४. i) चोरं गृह्णन् आरक्षकः ।
ii) आरक्षकेण गृह्यमाणः चोरः ।
५. i) वार्तां शृण्वन् (शृण्वती) अहम् ।
ii) मया श्रूयमाणा वार्ता ।
६. i) श्लोकं स्मरन्ती गीता ।
ii) गीतया स्मर्यमाणः श्लोकः ।
७. i) ग्रन्थं ददती सा ।
ii) तया दीयमानः ग्रन्थः ।
८. i) कथां वदन् एषः ।
ii) एतेन उच्यमाना कथा ।
९. i) शाटिकां क्रीणती महिला ।
ii) महिलया क्रीयमाणा शाटिका ।
१०. i) ग्रामं गच्छन् कृषिकः ।
ii) कृषिकेण गम्यमानः ग्रामः ।
११. i) पाठं पठन् छात्रः ।
ii) छात्रेण पठ्यमानः पाठः ।
१२. i) चित्रं पश्यन् बालकः ।
ii) बालकेन दृश्यमानं चित्रम् ।

## २.२.४.

१. पठ्यमाने पाठे । २. लिख्यमानायां कथायाम् । ३. खाद्यमाने फले ।
४. नीयमानायां पेटिकायाम् ।
५. क्रीयमाणानि वस्त्राणि ।
६. उच्यमानानि वाक्यानि ।
७. दीयमानानि पुस्तकानि ।
८. गृह्यमाणः चोरः । ९. निन्द्यमाना कर्मकरी । १०. क्रियमाणस्य कार्यस्य ।
११. श्रूयमाणायां वार्तायाम् ।
१२. स्मर्यमाणं श्लोकम् । १३. गीयमानं गीतम् । १४. पीयमानं क्षीरम् ।
१५. दृश्यमाने उद्याने ।

## २.२.५.

१. i) दूरदर्शनेन चित्रं प्रदर्श्यते ।
ii) तत् अहं पश्यामि ।
२. i) अर्चकेण मन्त्रः उच्यते ।
ii) तं भक्ताः शृण्वन्ति ।
३. i) भवत्या पाठः पाठ्यते ।
ii) सः मया सम्यक् ज्ञातः ।
४. i) शिशुना खाद्यं खाद्यते ।
ii) तत् एषः बलात् स्वीकृतवान् ।
५. i) माधवेन जलं पीयते ।
ii) तस्मिन् अवकराः सन्ति ।
६. i) केशवेन मार्गः सूच्यते ।
ii) तस्मिन् गर्ताः सन्ति ।
७. i) भवता कार्यं क्रियते ।
ii) तस्मात् कस्यापि अपायः नास्ति खलु ?
८. i) भवता पुस्तकं पठ्यते ।
ii) तस्य विषयः कथम् अस्ति ?
९. i) पितामहेन कथा कथ्यते ।
ii) सा नीरसा अस्ति भोः ।
१०. i) जनन्या पुत्री प्रेष्यते ।
ii) सा खिन्ना अस्ति ।

## २.२.६.

१. कर्मणि शानच् । २. कर्तरि शानच् ।
३. कर्मणि शानच् । ४. कर्तरि शानच् ।
५. कर्तरि शानच् । ६. कर्मणि शानच् ।
७. कर्मणि शानच् । ८. कर्मणि शानच् ।
९. कर्तरि शानच् । १०. कर्मणि शानच् ।
११. कर्मणि शानच् । १२. कर्मणि शानच् ।
१३. कर्तरि शानच् । १४. कर्तरि शानच् ।
१५. कर्तरि शानच् ।

* * *
*